# मन्त्रमहोदधिः सटीकः

# MANTRA MAHODADHI

## With Sanskrit Commentary.



मुद्रक और प्रकाशक

खेमराज श्रीकृष्णदास

अध्यक्ष–"श्रीवेंकटेश्वर" स्टीम–प्रेस,–बम्बई.

अग्निपूजनयन्त्रम् ॥ १ ॥ त. १ प. ८ श्लो. ११३



गणपतिपूजनयन्त्रम ॥२॥ त० २ प० १५ श्लो० १४



कालीपूजनयन्त्रम् ॥३॥ त. ३ प. २४ श्लो० ११



सुमुखीपूजनयन्त्रम् ॥४॥ त० ३ प० २७ श्लो० ५६



तारापूजनयन्त्रम् ॥५॥ त. ४ प. ३५ श्लो० ८७



ताराधारणयन्त्रम् ॥ ६ ॥ त० ४ प. ३७ श्लो० ११८




विद्याराज्ञीपूजनयन्त्रम् ॥ ७ ॥ त० ५ प० ४० श्लो० ३१



छिन्नमस्तापूजनयन्त्र ॥ ८ ॥ त० ६ प० ४५ श्लो० १२



स्वयंवरकलापूजनयन्त्रम् ॥ १ ॥ त० ६ प० ४८ श्लोक ६०



मधुमतीपूजनयन्त्र ॥१०॥ त० ६ प० ४९ श्लो० ७४



बंधनमोक्षकरंयन्त्रम्॥११॥ त.६ प.५० श्लो.९४.




धटयक्षिणीपूजनयन्त्रम् ॥१२॥ त. ७ प. ५१ श्लो० ११



कामेशीपूजनयन्त्र ॥१५॥ त० ७ प०.५७ श्लो० १११



मातङ्गीपूजनयन्त्रम् ॥१३॥ त. ७ प. ५५ श्लो० ७२



वागेश्वरीपूजनयन्त्रम् ॥१४॥ त० ७ प० ५७ श्लो० १०१



बालापूजनयन्त्रम् १६ त. ८ प. ५९ श्लो० १७



बालाधारणयन्त्रम १७ त० ८ प० ६३ श्लो० ७४




लघुश्यामापूजनयन्त्रम् १८ त० ८प० ६७ श्लो० १२१



अन्नपूर्णेश्वरीयन्त्रम् १९ त. ९ प. ६९ श्लो० ९



त्रैलोक्यमोहिनीपूजनयन्त्रम् २० त० ९ प० ७१ श्लोक. ३८



बगलामुखीपूजनयन्त्रं २१ त. १० प. ७९ श्लो० ७



बगलामुखीस्तभनयन्त्रं २२ त. १० प. ८० श्लो० २५




स्वप्नवाराहीपूजनयन्त्रम् २३ त० १० प० ८१ श्लो० ४१



स्वप्नवाराहीवशीकरणयन्त्रम् २४ त. १० प. ८१ श्लो ५०




स्वप्नवाराही धारण यन्त्रम् २५. त१० प. ८२ श्लो० ५८



वार्तालीपूजलयन्त्रम् २६ त. १० प. ८२ श्लो० ८७



## वार्तालीस्तंभनयन्त्रम्। २७ त १० प ८५ श्लो० १११.



श्रीपूजनयन्त्रम् २८ त ११ प. ९४ श्लो० ५३



गोपालसुन्दरीपूजनयन्त्रम् २९ त० १२ प० ११३ श्लो० ६८



हनुमत्पूजनयन्त्रम् ॥ ३० ॥ त. १३ प. ११४ श्लो० १०



## हनुमताधारण यन्त्रम ३१ त० १३ प० ११६ श्लोक ४६.



हनुमतः स्वरूपम् ३२ त॰ १३ प. १२० श्लो॰ १०५.



अथ हनुमतोरक्षाविधायकयन्त्रं ३३ त.१३ प.१२० श्लो॰ ११०.



नृसिंहपूजनयन्त्रं ३४ त. १४ प १२? श्लो० ७



अथगोपालपूजनयन्त्रं ३५ त. १४ प १२५ श्लो० ६०



[illegible]यंपूजनयन्त्रं ३६ त. १५ प. १३२ श्लो० २८



भौमपूजन य० ३७ त. १५ प. १३२ श्लो० ५०



व्यासपूजनय न्त्र ३८ त. १५ प. १३६ श्लो० १०३



मृत्युंजयपूजनयन्त्रं ३९ त. १६ प. १४० श्लो० २२



रुद्रपूजनयन्त्रम ४० त. १६ प. १४४ श्लो० ७८



गंगापूजनयन्त्रं ४१ त. १६ प १४७ श्लो० ११८



कार्तवीर्यपूजनयन्त्रं ४२ त. १७ प १५० श्लो० २२



कार्तवीर्यस्यकाम्यप्रयोगार्थपूजनयन्त्रम् ४३ त० १७ प० १५० श्लो० २२



कार्तवीर्यदीपस्थापनयन्त्रम् ४४ त. १७ प. १५२ श्लो० ६५



कालरात्रीपूजनयन्त्रं ६५ त० १८ प० १०८ श्लो० १३



कालरात्रं द्वीपस्थापनय त्रं ४६ त. १८ प. १५९ श्लो० ३९



काळरात्रिस्तंभनयन्त्रम् ४७ त० १८ प० १६० श्लो० ५२




काळरात्रीमोहनयन्त्रम् ४८ त. १८ प. १६१ श्लो० ६८



गडीपूजनयन्त्रं ४९ त. १८ प. १६७ श्लो० १४८



चरणायुधपूजनय त्रं ५० त. १९ प. १७२ श्लो० ११



वश्यकरंयन्त्रं ५१ त. २० प. १८२ श्लो० १६



वश्यकरंद्वितीयंयन्त्रम् ५२ त. २० प. १८२ श्लो० २१




स्वामिवश्यकरंयन्त्रं ५३ त. २० प. १८३ श्लो. २६




दिग्पस्तंभनाख्यन्यन्त्रं ५४ त. २० प. १८३ श्लो० ३०




राजमोहनयंपंचमख्यन्त्रम् ५५ त. २० प. १८३श्लो० ३४




मृत्युंजयाख्यं मृत्युदूरकर यन्त्र ५६ त. २० प. १८३ श्लो. ३६




विवादजयकरंयन्त्रम ५७ त. २०
प. १८४ श्लो० ४३



धनिकवश्यकरं यन्त्रं ५८ त. २० प. १८४ श्लो० ४६




दुष्टमोहनाख्यंमोहनयंत्रं ५९ त. २०
प. १८४ श्लो० ५१




सर्वत्रजयदंयन्त्रम् ६० त. २० प. १८४ श्लो० ५३




यावज्जीववश्यकरं यन्त्रं ६१ त. २० प. १८५ श्लो. ५८




नृपवश्यकरंयन्त्रम् ६२ त २० प. १८५ श्लो .६५




भृत्यवश्यकरंयन्त्रम् ६३ त. २०
प. १८५ श्लो० ६८



दुष्टनृपवश्यकरंयन्त्रम् ६४
त.२०प.१८५ श्लो०७०




ललिताख्यंपतिवश्यकरंयंत्रं ६५
त. २० प. १८६ श्लो० ७४




पति वश्यकर द्वितीयं यन्त्र ६६
त. २० प. १८६ श्लो० ८०




दौंभाग्यनाशनबीजयत्रं ६७ त. २० प. १८६ श्लो० ८२




आकर्षणयन्त्रम ६८ त. २०
प. १८६ श्लो० ८४




त्रिपुराख्यमाकर्षणयन्त्रं ६९ त. २०
प. १८३ श्लो० ८६



मुखमुद्रणंयन्त्रं ७० त. २० प. १८६ श्लो. ८८




अग्निभयहरंयन्त्रं ७१ त. २०
प. १८७ श्लो० ९०




विद्वेषकरंयन्त्रम् ७२ त. २० प. १८७ श्लो० ९३




मारणयन्त्रं ७३ त. २० प. १८७ श्लो० ९७




उच्चाटनकरंयन्त्रम् ७४ त. २०
प. १८७ श्लो० १०१




शांतिकरंयन्त्रं ७५ त. २० प. १८८ श्लो० १०६

| अ | आ | इ | ई | उ | ऊ | ऋ |
|---|---|---|---|---|---|---|
| ज | झ | ञ | ट | ठ | ड | ॠ |
| छ | भ | म | य | र | ढ | ऌ |
| च | ब | म | ह | ल | ण | ॡ |
| ङ | फ | ष | श | व | त | ए |
| घ | प | न | ध | द | थ | ऐ |
| ग | ख | क | अः | अं | औ | ओ |

शाकिनीनिवर्तकंयन्त्रं ७६ त. २० प. १८८ श्लो० ११२




ज्वरहरंयन्त्रम् ७७ त. २० प. १८८ श्लो० ११४




सर्पभयहरंयं त्रम् ७८ त. २० प. १८८ श्लो० ११६




बंधमोक्षकरंयन्त्रं ७९ त. २० प. १८९ श्लो० ११८




स्वर्णाकर्षणभैरवपूजनयन्त्रम ८० त० २० प० १८९ श्लो० १२



पात्रस्थापनयन्त्रम् ८१ त० २२ प० २०१ श्लो० १



पचायतनस्थापनक्रमः ८२ त. २२ प. २०३ श्लो. ३९

| | १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|---|
| ऊपर बायाँ | गणेश | शिव | गणेश | शिव | रवि |
| ऊपर दायाँ | रवि | रवि | विष्णु | गणेश | गणेश |
| मध्य | विष्णु | गणेश | रवि | शक्ति | शिव |
| नीचे बायाँ | शिव | विष्णु | शिव | विष्णु | विष्णु |
| नीचे दायाँ | शक्ति | शक्ति | शक्ति | रवि | शक्ति |

दमनपूजनेयन्त्रम् ८३ त० २३ प० २१३ श्लो० ११



पवित्रयजनयन्त्रं ८४ त. २२ प. २१५ श्लो. ५७



अकथहचक्रम् ८५ त. २४ प. २१९ श्लो० ३

| | | | |
|---|---|---|---|
| अ क<br>१<br>य ह | ड ड प<br>२<br>आ ख | आ ख<br>३<br>द क्ष | ऊ ञ फ<br>४ |
| आ ङ व<br>५ | ऌ झ म<br>६ | ओ ठ श<br>७ | ॡ ञ य<br>८ |
| ई ध न<br>९ | ऋ ज भ<br>१० | इ ग घ<br>११ | ॠ छ व<br>१२ |
| अः त स<br>१३ | ऐ ठ ल<br>१४ | अ ण ष<br>१५ | ए ट र<br>१६ |

अकडम चक्रम् ८६ त. २४ प. २२० श्लो २१



साध्यारिशोधनेतृतीयचक्रम् ८७ त. २४ प. २२० श्लो. २५

| | |
|---|---|
| अ उ ऌ ओ<br>क ङ झ ढ थ प म<br>वह | आ ऊ ॡ औ<br>ख च ञ ढ द फ य<br>शळ |
| ई ऋ ऐ अः<br>घ ज ठ त न भ ल<br>सज्ञः | इ ॠ ए अं<br>ग छ ट ण ध ब र<br>प क्ष. |

अशोधनचक्रम् ८८ त० २४ प. २२० श्लोक. २८

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अ<br>अ आ | भ<br>इ | कृ<br>ई उ ऊ | रो<br>ऋॠऌ<br>ॡ | मृ<br>ए | आ<br>ऐ | पु<br>ओऔ | पु<br>क | अ<br>खग |
| म<br>घङ | पू<br>च | उ<br>छ ज | ह<br>झ ञ | चि<br>ट ठ | स्वा<br>ड | वि<br>ढण | अ<br>तथद | ज्ये<br>ध |
| मू<br>न प फ | पू<br>ब | उ<br>भ | श्र<br>म | ध<br>यर | श<br>ल | पू<br>वश | उ<br>ष<br>स ह | रे<br>क्षअअः |

ऋणधनशोधनचक्रम् ८९ त० २४ प २२० श्लोकः ३२

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| १४ | २७ | २ | १२ | १५ | ६ | ४ | ३ | ५ | ८ | ९ |
| अ | इ | उ | ऋ | ऌ | ए | ऐ | ओ | आ | अं | अः |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| ब | भ | म | य | र | ल | व | श | ष | स | ह |
| १० | १ | ७ | ४ | ८ | ३ | ७ | ५ | ४ | १ | ७ |

मन्त्रशोधनचक्रम् ९० त. २४ प. २२२ श्लो. ५३




भूतवर्णाः ९१ त. २४ प. २२३ श्लोकः ८०

| पृथ्वी | जल | अग्नि | वायु | आकाश |
|---|---|---|---|---|
| उ | ऋ | इ | अ | ऌ |
| ऊ | ॠ | ई | आ | ॡ |
| ओ | औ | ए | ऐ | अं |
| ग | घ | ख | क | ङ |
| ज | झ | छ | च | ञ |
| ड | ढ | ट | ट | ण |
| द | ध | थ | त | न |
| ब | भ | फ | प | म |
| ल | व | र | य | श |
| ळ | स | क्ष | ष | ह |

जननयन्त्रम ९२ त. २४ प. २२४ श्लो. ९८



श्रीः

# अथ मन्त्रमहोदधिग्रन्थस्थविषयानुक्रमणिका प्रारभ्यते ।



श्लोक सं० १३५

## तृतीयस्तरंगः ३.



श्लोकसं० ७५

## चतुर्थस्तरंगः ४.



श्लोक सं० १२४

श्लो० १३२

## दशमस्तरंगः १०



श्लो० ११९

## एकादशस्तरंगः ११.



श्लो० १११

## द्वादशस्तरंगः १२.

## द्वाविंशस्तरंगः २२.



## त्रयोविंशस्तरंगः २३ ]

## चतुर्विंशस्तरंगः २४



## पंचविंशस्तरंगः २५

| विषया : | प० | पृ० |
|---|---|---|


इति मंत्रमहोदधेनुक्रमणिका समाप्ता

# अथ मन्त्रमहोदधिः सटीकः प्रारभ्यते

श्रीगणेशाय नमः ॥ श्रीभवानीशङ्कराभ्यांनमः ॥ नत्वालक्ष्मीपतिंदेवंस्वीयेमन्त्रमहोदधौ ॥ नावंविरचये रम्यांतरणायगुणैर्युताम् ॥ १ ॥ तत्रतावन्मंत्रमहोदधिनामकंतंत्रंचिकिषुराचार्यः शिष्टाचारपरिपालनायनिर्विघ्नग्रंथसमाप्तयेचेष्टदेवतानमस्कारपूर्वकंग्रंथकरणंप्रतिजानीते ॥ प्रणम्येति । लक्ष्म्यायुक्तोनृहरिर्लक्ष्मीनृहरिः । मध्यमपदलोपीसमासः । गुरुंश्रीनृसिंहाश्रमम् । मंत्रा एव महांत्युदकानिधी

श्रीगणेशाय नमः ॥ ॐनमः शिवाय ॥ ॐनमो भगवत्यै ॥ प्रणम्यलक्ष्मीनृहरिंमहागणपतिं गुरुम् ॥
तंत्राण्यनेकान्यालोक्यवक्ष्येमंत्रमहोदधिम् ॥ १ ॥ प्रातरुत्थायशिरसिध्यात्वागुरुपदांबुजम् ॥ आव
श्यकंविनिर्वर्त्यस्नातुंयायात्सरित्तटे ॥२॥ श्रौतेनविधिनास्नात्वामंत्रस्नानंसमाचरेत् ॥ स्मार्तसंध्यांमंत्रसंध्यांकृत्वादेवंविचिंतयेत् ॥३॥ गृहद्वारमथागत्यद्वारपूजांसमाचरेत् ॥ द्वारमस्त्रांबुनाप्रोक्ष्यगणेशंचोर्ध्वतोयजेत् ॥ ४ ॥ महालक्ष्मींदक्षभागेवामभागेसरस्वतीम् ॥ पुनर्दक्षेयजेद्विघ्नंगंगांचयमुनामपि ॥
॥ ५ ॥ पुनर्वामेक्षेत्रपालं स्वः सिंधुयमुनेअपि ॥ पुनर्दक्षेतुधातारंविधातारं तुवामतः ॥ ६ ॥

यंतेऽस्मिन्निति मंत्रमहोदधिः ग्रन्थः ॥ १ ॥ तत्रप्रातरारभ्यमंत्रिणःकृत्यमाह । प्रातरिति । स्पष्टम् । गुरुपादांबुजगलिताऽमृतधारयामानसंस्नानंकुर्यात्-इत्यादिपूजातरंगेवक्ष्यति ॥ २ ॥ ३ ॥ अस्त्रांबुना । अस्त्रायफडित्यभिमंत्रितजलेन ॥ ४ ॥ ५ ॥ ६ ॥

शंखपद्मौनिधीतद्वद्दक्षवामयोःद्वारपालांस्तत्तद्देवानांवक्ष्यमाणाम् ॥ ७ ॥८॥ द्वात्रिंशद्वारंप्रणवजपन्प्राणं पूरयेत् ॥ चतुःषष्टिवारं जप न्कुंभयेत् ॥ षोडशवारंजपन्रेचयदित्यर्थः ॥ ९ ॥ मूलाधारात्कुंडलिनोमुत्थाप्यसमाहितःसन्ध्यायेत् ॥ १० ॥ हृदोजीवंगृहीत्वासुषु

तद्वन्निधीशंखपद्मौततोऽचद्वद्वारपालकान् ॥ द्वारपूजांविधायेत्थंप्रविश्यार्चनमंदिरम् ॥७॥ उपविश्यास नेनत्वागणेशगुरुदेवताः ॥ प्राणानायम्यतारेणपूरकुंभकरेचकैः ॥ ८ ॥ द्वात्रिंशताचतुःषष्ट्याक्रमात्षो डशसंख्यया ॥ देवार्चायोग्यताप्राप्त्यैभूतशुद्धिंसमाचरेत् ॥९॥ मूलाधारस्थितांदेवींकुंडलींपरदेवताम् बिसतंतुनिभांविद्युत्प्रभांध्यायेत्समाहितः ॥१०॥ मूलाधारात्समुत्थाप्यसंगतांहृदयांबुजे ॥ सुषुम्नामा र्गमाश्रित्यादायजीवंहृदंबुजात् ॥११॥ प्रदीपकलिकाकारंब्रह्मरंध्रगतंस्मरेत्॥जीवंब्रह्मणिसंयोज्यहंसमं त्रेणसाधकः॥१२॥पादादिब्रह्मरंध्रांतंस्थितंभूतगणंस्मरेत्॥ स्ववर्णबीजाकृतिभिर्युक्तंतद्विधिरुच्यते१३

म्नामार्गेणब्रह्मरंध्रंनीत्वाब्रह्मणिस्थापयेदितिगुरूपदेशगम्योऽर्थोयोगिना ज्ञेयः ॥ योगाभावे स्मरणमात्रंविधेयम् ॥ ११ ॥ १२ ॥ वर्णा पीतादयः ॥ बीजानिलमित्यादीनि ॥ आकृतयश्चतुष्कोणादयः ॥ तद्युक्तंभूतगणम् ॥ १३ ॥

तदेवदर्शयति ॥ पादादीति ॥ १४ ॥ भूमंडले यदिंद्रियं गमनं घ्राणं गंधः ब्रह्मनिवृत्तिः समानः गंतव्यो देशोपि । एवमष्टौपदार्थाश्चि

पादादिजानुपर्य्यंतंचतुष्कोणंसवज्रकम् ॥ भूबीजाढ्यंस्वर्णवर्णंस्मरेदेवनिमंडलम् ॥१४॥ जान्वाद्याना भिचंद्रार्द्धनिभंपद्मद्वयांकितम् ॥ वंबीजयुक्तंश्वेताभमंभसोमंडलंस्मरेत् ॥१५॥ नाभेर्हृदयपर्य्यन्तंत्रिको णंस्वस्तिकान्वितम् ॥ रंबीजेनयुतंरक्तंस्मरत्पावकमंडलम् ॥ १६ ॥ हृदोभ्रूमध्यपर्य्यंतवृत्तंषड्बिंदुलां छितम् ॥ यंबीजयुक्तंधूम्राभंनभस्वन्मंडलंस्मरेत् ॥ १७ ॥ आब्रह्मरंध्रंभ्रूमध्याद्वृत्तंस्वच्छमनोहरम् ॥ हंबीजयुक्तमाकाशमंडलंप्रविचिन्तयेत् ॥१८॥ पद्धस्तपायूपस्थावाक्क्रमाद्ध्येयाधरादिगाः ॥स्वकीयवि पयैर्युक्तागमनग्रहणादिभिः ॥१९॥ घ्राणंचरसनाचक्षुःस्पशर्नंश्रोत्रमिंद्रियम् ॥क्रमाद्ध्येयंधरादिस्थंगंधा दिगुणसंयुतम्॥२०॥ ब्रह्मविष्णुशिवेशानाःसदाशिवइतीरिताः॥धरादिभूतसंघेशाध्येयास्तत्मंडलेषुते२१

त्या ॥ एवंजलमंडलं ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥



---

१ शंखनिधयेनमः । पद्मनिधयेनमः ।

स्वकीयविषयसंयुक्तागमनग्रहणादिभिश्चयुक्ता इत्यर्थः । विषयास्तु गंतव्यदेशग्राह्यवस्तुविसर्जनीयविट्स्त्रीयोनिवक्तव्यवस्तुमात्रात्मकाः गमनादय स्तु गमनग्रहणविसर्गस्त्रीयोनिस्पर्शवर्जनानंदवदनरूपाइतिसांप्रदायिकाः ।

हस्तग्रहणग्राह्यरसनारसविष्णुप्रतिष्ठोदानाः ॥ तेजसि–पायुविसर्गविसजनीयचक्षूरूपंशिवविद्याव्यानाः ॥ वायौउपस्थानदक्षीस्पर्श

निवृत्तिश्चप्रतिष्ठाचविद्याशांतिश्चतुर्थिका ॥ शांत्यतीतेतिपंचैवकलाध्येयाधरादिगाः ॥ २२ ॥ समानो दानव्यानाश्चापानप्राणौचवायवः ॥ धरादिमंडलगताः पंचध्येयाःक्रमादिमे ॥ २३ ॥ एवंभूतांनिसं चिंत्यप्रत्येकंप्रविलापयेत् ॥ भुवंजलेजलंवह्नौवह्निंवायौनभस्यमुम् ॥ २४ ॥ विलाप्यखमहंकारेमहत्त त्त्वेप्यहंकृतिम् ॥ महांतंप्रकृतौमायामात्मनिप्रविलापयेत् ॥ २५ ॥ शुद्धसच्चिन्मयोभूत्वाचिंतयेत्पापपु रुषम् ॥ दक्षकुक्षिस्थितंकृष्णमंगुष्ठपरिमाणकम् ॥२६॥ विप्रहत्याशिरोयुक्तंकनकस्तेयबाहुकम् ॥ म दिरापानहृदयंगुरुतल्पकटीयुतम् ॥२७॥ पापिसंयोगिपद्द्वंद्वमुपपातकरोमकम् ॥ खड्गचर्मधरंदुष्टमधो वक्त्रंसुदुःसहम् ॥२८॥ वायुबीजं(यं)स्मरन्वायुंसंपूर्य्यैनंविशोषयेत् ॥ स्वशरीरयुतंमंत्रीवह्नि(रं)बीजेननि र्दहेत् ॥२९॥ कुंभकेपरिजप्तेनततःपापनरोद्भवम् ॥ बहिर्भस्मसमुत्सार्य्यवायुबीजेन(यं)रेचयेत् ॥३०॥

नस्पर्शेशानशांत्यपानाः ॥ नभसि–वाग्वक्तव्यवदनश्रोत्रशब्दसद शिवशांत्यतीताप्राणाः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ ॥ २७ ॥ २८ ॥ वायुबीज यं वह्निबीजं रं ॥ २९ ॥ ३० ॥

सुधाबीज वं भूबीजं लं नभोबीजह तंनशरीरंसावयवं कुर्यात् ॥ ३१ ॥ ३२ ॥ चित्तःब्रह्मणःसकाशात् ॥ ३३ ॥ ३४ ॥ ३५ ॥ पाशः

सुधाबीजेन ( वं ) देहोत्थंभस्मसंप्लावयेत्सुधीः ॥ भूबीजेन ( लं ) घनीकृत्यभस्मतत्कनकांडवत् ॥ ॥ ३१ ॥ विशुद्धमुकुराकारंजपन्बीजंविहायसः (हं) ॥ मूर्द्धादिपादपर्य्यंतान्यंगानिरचयेत्सुधीः ॥ ॥३२॥ आकाशादीनिभूतानिपुनरुत्पादयेच्चितः ॥ सोहंमंत्रेणचात्मानमानयेद्धृदयांबुजे ॥ ३३ ॥ कुंडलींजीवमादायपरसंगात्सुधामयम् ॥ संस्थाप्यहृदयांभोजेमूलाधारगतांस्मरेत् ॥ ३४ ॥ भूतशु द्धिंविधायैवंप्राणस्थापनमाचरेत् ॥ प्राणप्रतिष्ठामंत्रस्यमुनयोजेशपद्मजाः ॥ ३५ ॥ छंदऋग्यजुषंसा मप्राणशक्तिस्तुदेवता ॥ पाशो ( आं ) बीजंत्रपा ( ह्रीं ) शक्तिर्विनियोःसुसंस्थितौ ॥ ३६ ॥

आं त्रपा ह्रीं असुसंस्थितौ प्राणस्थापने विनियोगः ॥ ३६ ॥

---

१ एवमितिचतुष्कोणंसवज्रांकभूबीजाढ्यंस्वर्णवर्णंपदाद्यष्टकयुक्तभूमंडलंचिंतयेदेवमेवाग्रिमेषुचतुर्ष्वितिभावः ।

१ चितइति । विलापनव्युत्क्रमेणचिदादितोमायादिप्रादुर्भावयेत् । अहंकारादितआकाशादीनि भावयेदित्यर्थः । २ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य अजेशपद्मजाऋषयः । ऋग्यजुःसामानिच्छंदांसि । प्राणशक्तिर्देवता । आंबीजम् । ह्रीं शक्तिः क्रौंकीलकम । प्राणस्थापनेविनियोगः ।

कवर्गेति क्रमतःपंचममतिप्रयोगः ङंकंखंगंआकाशवायुतेजोजलपृथिव्यात्मनेहृदयायनमइत्यादि ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

ऋषीञ्छिरसिवक्रेतुच्छंदांसिहृदिदेवताम् ॥ गुह्यबीजंपदोःशक्तिंन्यस्यकुर्य्यात्षडंगकम् ॥३७॥ कवर्गनभआद्यैर्हृञ्चशब्दाद्यैःशिरःस्मृतम् ॥ टश्रोत्राद्यैःशिखाप्रोक्तातवार्गाद्यैस्तनुच्छदम् ॥ ३८ ॥ पवक्तव्यादिभिर्नेत्रमस्त्रंयेनांतरिंद्रियैः ॥ आत्मनेतान्मनूनंगान्विन्यसेद्धृदयादिषु ॥ ३९ ॥ पंचमंप्रथमंपश्चाद्द्वितीयंचचतुर्थकम् ॥ तृतीयमित्थंक्रमतोवर्गवर्णान्समुच्चरेत् ॥ ४० ॥ यवर्गेप्येवमुच्चार्य्यनमः (हं) श्वेतो (षं) तिमो (शं) भृगुः ( सं ) ॥ विमलश्चेति ( ळं ) चोच्चार्य्याःक्रमाद्वर्णाःसबिंदवः ॥ ॥४१॥ नभोवाय्वग्निवार्भूमिनभआदयईरिताः ॥ शब्दस्पर्शौरूपरसगंधाःशब्दादयोमताः ॥ ४२ ॥ श्रोत्रंत्वङ्नयनंजिह्वाघ्राणं श्रोत्रादयःस्मृताः ॥ वाक्पाणी पादपायूचोपस्थोवागादयः पुनः ॥४३॥ वक्तव्यादानगमनविसर्गानंदसंज्ञकाः ॥ वक्तव्याद्याबुद्धिमनोहंकाराश्चित्तसंयुताः ॥४४॥ अंतरिंद्रियसंज्ञाःस्युरेवमुक्तंषडंगकम् ॥ नाभेरारभ्यपादांतंपाशबीजंप्रविन्यसेत् ॥ ४५ ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

शक्तिर्ह्रींश्रृणिक्रौं ॥ ४६ ॥ आत्मनेइति ॥ आत्मनेनम इत्यंतानित्वगादीनि हृदि न्यसेत् यादिवर्णपूर्वाणियंत्वगात्मनेनम इत्यादि ॥ सद्यॐकारस्तदन्वितआकाशोहःतदाद्यमोजः हौंओजआत्मनेनमः ॥ खं हः तदादिकंप्राणं हं प्राणात्मने नमः ॥ ४७ ॥

नाभ्यंतंहृदयाच्छक्तिं (ह्रीं) हृदंतंमस्तकाच्छृणिम् (क्रौं) ॥ त्वंगसृङ्मांसमेदोस्थिमज्जाशुक्राणि विन्यसेत्॥४६॥आत्मनेहृदयांतानियादिसप्तादिकान्यपि ॥ ओजःसद्यान्विताकाशपूर्व्वप्राणंतुखादिकम् ॥ ॥ ४७ ॥ भृग्वादिकंन्यसेज्जीवमेतान्हृदयदेशतः ॥ यंकाराद्याआद्यवर्णाःसर्व्वेस्युश्चंद्रभूषिताः ॥४८॥ ततः समस्तमूलेनमूर्द्धादिचरणावधि ॥ विधायव्यापकन्यासंविन्यसेत्पीठदेवताः ॥ ४९ ॥ मंडूकश्चाथकालाग्नीरुद्रआधारशक्तियुक् ॥ कूर्मोधरासुधासिंधुःश्वेतद्वीपंसुरांघ्रिपाः ॥ ५० ॥

भृगुः सः ॥ तदादिकंजीवात्मनेनमः ॥ यादयोवर्णाश्चंद्रेर्णानुस्वारेणभूषितायुताः कार्याः ॥ ४८ ॥ मंडूकइत्यादिपीठदेवताः ॥ सुधासिंधुरित्यत्रसमुद्रविशेषंवक्ष्यति ॥ विरागतावैराग्यम् । न आदिकाअधर्मयनम इत्यादि ॥ ४९ ॥ ५० ॥

प्रयोगस्तुङंकंखंघंगंनभोवाय्वाग्निवाभूम्यात्मनेहृदयायनमइत्यादि एवमेवाग्रेतिस्वस्वजातियुक्तंन्यसेत् ॥ तथाहि॥ ञंचंछंझंजंशब्दस्पर्शरूपरसगंधात्मने शिरसे स्वाहा । णंटंठंढंडंश्रोत्रत्वङ्नयनजिह्वाप्राणात्मनेशिखायैवषट् ॥ नंतथंधंदं वाक्यपाणिपादपायूपस्थात्मनेकवचायहुं ॥ मंपंफंभंबंवक्तव्यादानगमनविसर्गानंदात्मनेनेत्रत्रयायवौषट् ॥ शंयंरंवंलंहंषंक्षंसंळंबुद्धिमनोहंकारचित्तात्मनेअस्त्रायफट ॥

१ यत्वगात्मनेनमः रंअसृगात्मनेनमइत्यादि । २ यंरंलंवंशंषंसंहंळंक्षंमूर्द्धादिचरणान्तंव्यापकंकुर्यात् । ३ मंमंडूकायनमः कंकालाग्निरुद्रायह्रौंओजात्मने हं प्राणात्मनेसंजीवात्मने । एवंसर्वत्राधर्मपूर्वेषुचतुर्पुनञ्समासः । अंअधर्माय अंअज्ञानाय अंअविरागाय अंअनैश्वर्यायनमः ।

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ पीठदेवतानान्यासस्थानानिबहिर्यागेचपूजास्थानानिएकविंशेतरंगे वक्ष्यन्ते

मणिहर्म्यंहेमपीठंधर्मोज्ञानंविरागता॥ऐश्वर्यंधर्म्मपूर्वास्तुचत्वारस्तेनञादिकाः५१धर्म्मादयःस्मृताःपादाः पीठगात्राणिचेतरे ॥ मध्येनंतस्तत्त्वपद्ममानंदमयकन्दकम् ॥५२॥ संविन्नालंततःप्रोक्ताविकारमयकेसराः ॥ प्रकृत्यात्मकपत्राणिपंचाशद्वर्णकर्णिका ॥ ५३ ॥ सूर्य्यस्येंदोःपावकस्यमंडलत्रितयंततः ॥ सत्त्वंरजस्तमःपश्चादात्मयुक्तोंतरात्मना ॥ ५४ ॥ परमात्माथज्ञानात्मातत्त्वेमायाकलादिके ॥ विद्यातत्त्वंपरंतत्त्वंकथिताःपीठदेवताः ॥ ५५ ॥ पूजनेसर्वदेवानांपीठेताःपरिपूजयेत् ॥ न्यासस्थानानिचैतासांशरीरेबहिरर्चने ॥५६॥ पूजातरङ्गेवक्ष्यन्तेमंद्वाद्यर्णयुताश्चताः ॥ प्राणशक्तेस्ततःपूज्याअष्टौपीठस्यशक्तयः ॥ ५७ ॥ हृदयांभोजपत्रेषुनवमीत्वधिकर्णिकम् ॥ जंयाख्याविजयापश्चादजिताचाऽपराजिता ॥ ५८ ॥

ताः मंडूकाद्याःसेंद्वाद्यर्णयुताः ॥ सानुस्वारप्रथमाक्षरयुताः । मंमंडूकाय नम इत्यादि ॥ ५७ ॥ हृदयपद्मपत्रेष्वष्टौ । नवमीकर्णिकायाम् । ताएवाह । जयेति ॥ ५८ ॥

पाशादीति ॥ आंक्लींक्रौमितिपीठमंत्रः ॥ ५९ ॥ ६० ॥ ध्यानमाह । पाशमिति ॥ षड्हस्तादेवीपाशधनुःशूलानि वामहस्तेषुरक्तकपालांकुशबाणान्दक्षेषु रक्तमयोयउदन्वान् समुद्रस्तत्रपोतोनौस्तत्ररक्तपद्मंतत्रस्थिताम् ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥

नित्यांविलासिनीदोग्ध्रींत्वघोरामङ्गलांतिमा पाशादिबीजत्रितयं ( आंह्रींक्रौं ) प्रोच्यपीठंदिशेत्ततः ॥ ५९ ॥ एवंदेहमयेपीठेध्यायेद्देवीमसुप्रदाम् ॥ नवयौनवगर्वाढ्यांपीवरस्तनशोभिनीम् ॥ ६० ॥ पाशंचापासृक्कपालेसृणीषूञ्छूलंहस्तैर्बिभ्रतींरक्तवर्णाम् ॥ रक्तोदन्वत्पोतरक्तांबुजस्थांदेवींध्यायेत्प्राणशक्तिंत्रिनेत्राम् ॥ ६१ ॥ अष्टपत्रस्थषट्कोणेध्यात्वैवंपूजयेत्तुतान् ॥ प्राग्रक्षोवायुकोणेषुब्रह्मविष्णुशिवान्यजेत् ॥ ६२ ॥ अग्निवारुणशैवेषुवाणीलक्ष्मीहिमाद्रिजाः ॥ केसरेषुषडंगानिपत्रेष्वष्टौतुमातरः ॥ ॥ ६३ ॥ ब्राह्मीमाहेश्वरीचापिकौमारीवैष्णवीतथा ॥ वाराहीचतथेंद्राणीचामुंडासप्तमीमता ॥६४॥ अष्टमीतुमहालक्ष्मीःप्रोक्ताविश्वस्यमातरः ॥ देवतापूजनेप्राचीमध्येपूजकपूज्ययोः ॥ ६५ ॥ इंद्रादयःस्वदिक्ष्वेवपूजनीयादिगीश्वराः ॥ इंद्रःकृशानुःकीनाशोनिर्ऋतिर्वरुणोनिलः ॥ ६६ ॥ सोमईशाननामाधोनंतऊर्ध्वेचतुर्म्मुखः ॥ ततइंद्रादिकाष्ठासुपूज्यादिक्पालहेतयः ॥ ६७ ॥

इंद्रादयःप्रसिद्धदिक्ष्वेवार्च्याः ॥ अन्यावरणे पूज्यपूजकयोर्मध्येप्राची ॥ ६६ ॥ ६७ ॥

---

१ संसंविन्नालायनमः; विंविकारमयकेसरेभ्योनमः । २ संसूर्यमंडलाय, चंद्रंभ० अंनिम० । ३ मंमायातत्त्वाय, कलातत्त्वाय ।

१ अग्नीशासुरवायव्यमध्यदिक्ष्वंगपूजनमितिवक्ष्यमाणप्रकारणेतिभावः । पूर्वेइन्द्रायनमः इतिबोध्यम् । अग्नयेनमःवायवे नमः ।

मन्त्रमुद्धरति । पाशमिति ॥ आंह्रींक्रौंयंरंलंषंसं तारान्वितंनभः हौं सप्तार्णोवक्ष्यमाणः । अजपा हंसः ॥

वज्रंशक्तिर्दंडखड्गौपाशोंकुशगदेअपि ॥ त्रिशूलचक्रपद्मानिदशदिक्पालहेतयः ॥६८॥ एवमिष्ट्वाप्राण शक्तिंपंचावरणसंयुताम् ॥ ध्यायन्हृदिकरंधृत्वात्रिर्जपेतन्मनुंसुधीः ॥ ६९ ॥ वक्ष्येधुनामनोस्तस्योद्धारंध्यातृसुखावहम् ॥ पाशं ( आं ) मायां ( ह्रीं ) सृणिं ( क्रौं ) प्रोच्ययादीन्सप्तेन्दुसंयुतान्॥७० तारान्वितंनभःसप्तवर्णमंत्रं ततोऽजपाम् ॥ ममप्राणाइहप्राणाममजीवइहस्थितः ॥ ७१ ॥ ममसर्वेन्द्रियाण्युक्त्वाममवाङ्मनईरयेत्॥चक्षुःश्रोत्रघ्राणपदात्प्राणाइहसमीर्य्यच॥७२॥आगत्यसुखमुच्चार्य्यचिरंतिष्ठं त्वेदंपठेत् ॥ वह्निजायां ( स्वाहा ) चसप्तप्राणमन्त्रमंतेपुनर्व्वदेत् ॥ ७३ ॥ प्राणप्रतिष्ठामंत्रोयंस्मृतः प्राणनिधापने ॥ ममेत्यस्यपदस्यादौपाशादीनिसमुच्चरेत्॥७४॥यंत्रेषुप्रतिमादौवाप्राणस्थापनमाचरन्। ममस्थानेतस्यतस्यषष्ठ्यंतामभिधांवदेत् ॥७५॥ सबिंदवोमेरुहंसाकाशाः सर्गीभृगुःपुनः ॥ मायेतितारुरुद्धोयंमंत्रः सप्ताक्षरोमतः ॥ ७६ ॥

॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ सप्तार्णमुद्धरति । सबिंदवइति । मेरुःक्षः हंसः सः आकाशोहः भृगुसः माया ह्रींताररुद्रः प्रणवपुटितः तेनॐक्षंसं हंसः ह्रीं ओमितिसप्तार्णः ॥७६॥ मातृकामाह ॥ अकाराद्याइति प्रसिद्धा इत्यर्थः ॥७७॥ षडंगमाह । पंचेति । क्लीबाऋॠऌॡ तद्धीनाःसानुस्वारायेह्रस्वदीर्घास्तदंतरस्थितैःसबिंदुभिःजात

एवंप्राणान्प्रतिष्ठाप्यमातृकान्यासमाचारेत् ॥ आकाराद्याःक्षकारांतावर्णाःप्रोक्तातुमातृका ॥७७॥ प्रजापतिर्म्मुनिस्तस्यागायत्रीछंदईरितम् ॥ सरस्वतीदेवतोक्ताविनियोगोऽखिलाप्तये ॥ हलोबीजानिचोक्तानिस्वराः शक्तयईरिताः ॥ ७८ ॥ मूर्ध्निवक्त्रेहृदिन्यस्येद्दष्यादीन्साधकोत्तमः पंचवर्गैर्यादिभिश्चषडंगानिसमाचरेत् ॥ ७९ ॥ क्लीबहीनशशांकाढ्यह्रस्वदीर्घांतरस्थितैः ॥ सानुस्वारैर्ज्जातियुक्तैर्ध्यायेद्देवीहृदंबुजे ॥८०॥ पंचाशदर्णैरचितांगभागांधृतेंदुखंडांकुमुदावदाताम् ॥ वराभयेपुस्तकमक्षसूत्रंभजेगिरंसंदधतींत्रिनेत्राम् ॥ ८१ ॥

यो हृदयायनमइत्यादयस्तद्युक्तःषड्वर्गैःषडंग अंकंखंगंघंङंआंहृदयायनमइत्यादि ॥ ॥ ७८ ॥ ७९ ॥ ८० ॥ ध्यानमाह ॥ पंचाशदिति

१ मंत्रोद्धारः । आंह्रींक्रौंयंरंलंवंशंषसंहों ॐ क्षंसंहंसः ह्रींॐ हंसःमहाप्राणाइहप्राणाः । आं० ममजीवइहस्थितः । आं०मगसर्वेंद्रियाणीह स्थितानि । आं०भमवाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाइहागत्यसुखंचिरंतिष्ठंतुस्वाहा ॐक्षंसंहंसः ह्रीं ॐ ।

अव्यक्तंकीलम् । २ मूर्ध्नीत्यादि । शक्तिबीजयोरपिपूर्वोक्तस्थानोपलक्षणम्।ओंक्षंसंहंसःह्रींओं ब्रह्मऋषयेमूर्ध्निगायत्रीछंदसेनमःवक्त्रे सरस्वतीदेवतायैनमो हृदि हंबीजेभ्योनमः गुह्ये स्वरशक्तिभ्योनमः पादयोः । एवमृष्यादि । ३ प्रयोगस्तु–अंकंगंघंङंआंअंगुष्ठाभ्यांनमःइंचं ५ ईं तर्ज० इत्यादि । अकं ५ आंहृदयायनमः । नमःस्वाहावषट्चैवहुंवौषट्फट्क्रमेणतु ।

वर्णैरंगरचनान्यासाद्बोध्या । वराक्षस्त्रजौदक्षयोः ॥ पुस्तकाभयेवामयोः । गिरंसरस्वतीम् ॥ ८१ ॥ पूर्वमीरितामंडूकाद्याः ॥ ८२ ॥

ध्यात्वैवंपूजयेत्पीठेदेवताःपूर्वमीरिताः ॥ पीठशक्तीस्तदुपरिसरस्वत्यानवार्चयेत् ॥ ८२ ॥ मेधाप्रज्ञाप्रभाविद्याश्रीधृतिस्मृतिबुद्धयः ॥ विद्येश्वरीतिसंप्रोक्तामातृकापीठशक्तयः ॥ ८३ ॥ वियद्भृगुस्थमनुयुग्विसर्गाढ्यंचमातृका ॥ योगपीठायनत्यंतोमनुरासनदेशने ॥८४॥ मूर्तिंसंकल्प्यमूलेनतस्यांवाणीम्प्रपूजयेत् ॥ आदावंगानिसंपूज्यद्वितीयेपूजयेत्स्वरौ ॥८५॥ द्वौद्वौतृतीयेवर्गाश्चवर्गशक्तिश्चतुर्थके॥ व्यापिनीपालिनीचापिपावनीक्लेदिनीपुनः ॥ ८६ ॥ धारिणीमालिनीपश्चाद्धंसिनीशंखिनीतथा ॥ वर्गशक्तयइत्युक्ताःपञ्चमेत्वष्टमातरः ॥ ८७ ॥ षष्ठेशक्रादयोदेवाःसप्तमेवज्रपूर्वकाः ॥ इत्थंसंपूज्यदेवेशींन्यसेद्वर्णान्निजांगके ॥ ८८ ॥ ललाटेमुखवृत्तेक्षिश्रवोनासासुगंडयोः ॥ ओष्ठयोर्दंतपंक्त्योश्चमूर्ध्निवक्त्रेन्यसेत्स्वरान् ॥ ८९ ॥ बाह्वोःसंधिषुसाग्रेषुकचवर्गौन्यसेत्सुधीः ॥ टतवर्गौपदोस्तद्वत्पार्श्वयोःपृष्ठदेशतः ॥९०॥ नाभौकुक्षौपवर्गंचहृदंसंककुदंततः ॥ न्यस्यययोदिचतुर्वर्णाञ्छादिषट्कंततोन्यसेत् ॥९१॥

॥ ८३ ॥ आसनमंत्रमाह । वियत् हः ॥ भृगुः सः मनुरौ तेनहसौः मातृकायोगपीठायनम इति ॥ ८४—९१ ॥

हृदादीनिकरपादोदरमुखेषुसंबध्यते ॥ ९२ ॥ ९३ ॥ स्थितिन्यासेध्यानमाह । मृगेति । मृगविद्येवामयोः ॥ वराक्षसूत्रेदक्षयोः ॥

हृदादिकरयोरंघ्र्योर्ज्जठरेवदनेतथा ॥ सृष्टिन्यासंविधायैवंस्थितिन्यासंसमाचरेत् ॥ ९२ ॥ ऋषिश्छंदश्चपूर्वोक्तोदेवताविश्वपालिनी ॥ उपविष्टांवल्लभांकेध्यायेद्देवीमनन्यधीः ॥ ९३ ॥ मृगबालंवरंविद्यामक्षसूत्रंदधत्करैः ॥ मालाविद्यालसद्धस्तांवहन्ध्येयःशिवोगिरम् ॥ ९४ ॥ एवंध्यात्वाडकाराद्यान्वर्णानंगेषुविन्यसेत् ॥ ॥ गुल्फादिजानुपर्य्यन्तंस्थितिन्यासोयमीरितः ॥ ९५ ॥ न्यासेसंहारसंज्ञेतुऋषिश्छंदश्चपूर्ववत् ॥ संहारिणीसपत्नानांशारदादेवतास्मृता ॥ ९६ ॥ अक्षस्त्रक्टंकसारंगविद्याहस्तांत्रिलोचनाम् ॥ चंद्रमौलिंकुचानम्रांरक्ताब्जस्थांगिरंभजे ॥ ९७ ॥

देव्यामालाविद्येदक्षवामयोः ॥ ९४ ॥ ९५ ॥ ९६ ॥ संहारन्यासेध्यानमाह ॥ अक्षेति । मृगविद्ये वामयोः ॥ अक्षस्त्रक्टंकौदक्षयोः ॥ टंकः परशुः ॥ ९७ ॥

१ हसौःमातृकायोगपीठायनमः । २ यंहृदि रंदक्षांगे । लंककुदि । वंवामांसे ।

१ नमःस्वाहेत्यादि० । शंयंकरयोः । संहं अघ्र्योः । लंक्षंवदनेजठरे च । हृदयादाविवजठरवदनयोर्न्यसेदित्यर्थः । २ दक्षिणगुल्फादिक्रमेणपूर्वोक्तस्थानेस्थितिन्यासः ।

॥९८॥ नत्यंता: ॥ अंनम:तारसंपुटा: ॥ ॐमित्यादि ॥ ९९ ॥ १०० ॥ १०१ ॥ १०२ ॥ १०३ ॥ दीपस्थानमाह । नवधेति । जपस्थानभूमिंनवधा कृत्वा ॥ पूर्वादिकोष्ठेषुकचटतपयशवर्गान् लक्ष इत्यष्टमेविलिख्यमध्यकोष्ठमपि नवधाविधाय तत्र पूर्वादिषुस्वरद्वंद्वं

ध्यात्वैवंविन्यसेद्वर्णान्क्षाद्यानांतान्विलोमतः ॥ सृष्टिन्यासेतुसर्गांताःसर्गबिंद्वंतिकाःस्थितौ ॥ ९८ ॥ बिंद्वंताःसंहतोचैषापूर्व्ववच्चांगपूजने ॥ न्यस्याःसर्वत्रनत्यंतावर्णाचातारसंपुटाः ॥ ९९ ॥ सृष्टिन्यासं स्थितिन्यासंपुनः कुर्यात्प्रयत्नतः ॥ अन्येतु मातृकान्यासाःकथ्याःपूजातरंगके ॥ १०० ॥ मंत्रस्नानादिविधयोगद्यास्तत्रैवतेमया ॥ भारतीमेवमाराध्यभजे दिष्टान्मनून्सुधीः ॥ १ ॥ विष्णुःशिवोगणेशोर्कोदुर्गापंचैवदेवताः ॥ आराध्याः सिद्धिकामेनतत्तन्मंत्रैर्य्यथोदितम् ॥२॥ आदौदेववशीकर्तुंपुरश्चरणमाचरेत् ॥ तीर्थादौनिर्जनेस्थानेभूमिग्रहणपूर्वकम् ॥३॥ नवधातांधरांकृत्वापूर्व्वादिषुसमालिखेत् ॥ कोष्ठेषुसप्तवर्गांश्चलक्षौमध्येतथास्वरान् ॥ ४ ॥ क्षेत्रनामादिमोवर्णस्तत्रकोष्ठेभवेत्ततः ॥ उपविश्यजपंकुर्य्यान्नान्यस्मिन्दुःखदेस्थले ॥ १०५ ॥

क्षेत्रनामादिवर्णोयत्रकोष्ठेतदेवजपस्थानंसिद्धिदम् ॥ १०४ ॥ १०५ ॥

पुरश्चरणधर्मानाह आमध्याह्नमिति ॥ उपांशु शनवर्णोच्चारणं मानसं मानसैव । त्रिःस्नायीत्रिषवणस्नानशील: ॥ १०६ ॥ अन्यैःसंभाषणमन्यभाषाम् ॥ अंत्यजानामीक्षांदर्शनंत्यजेत् ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ होम

आमध्याह्नंजपंकुर्यादुपांशुत्वथमानसम् ॥ हविष्यंनिशिभुंजीतत्रिःस्नाय्यभ्यंगवर्जित ॥१०६॥ व्यग्रतालस्यनिष्ठीवक्रोधपादप्रसारणम् ॥ अन्यभाषांपरेक्षांचजपकालेत्यजेत्सुधीः ॥ ७ ॥ स्त्रीशूद्रभाषणंनिंदांतांबूलंशयनंदिवा ॥ प्रतिग्रहंनृत्यगीतेकौटिल्यंवर्जयेत्सदा ॥ ८ ॥ भूशय्यांब्रह्मचर्य्यंचत्रिकालंदेवतार्च्चनम् ॥ नैमित्तिकार्चनंदेवस्तुतिंविश्वासमाश्रयेत् ॥ ९ ॥ प्रत्यहंप्रत्यहंतावन्नैवन्यूनाधिकंक्वचित् ॥ एवंजपंसमाप्यांतेयशांशंहोममाचरेत् ॥ ११० ॥ तत्तत्कल्पोदितैर्द्रव्यैस्तद्विधानमुदीर्यते॥प्राणायामंषडंगंचकृत्वामूलेनमंत्रवित् ॥ ११ ॥ कुंडेवास्थंडिलेकुर्यात्संस्काराणांचतुष्टयम् ॥ मूलेनेक्षणमस्त्रेणप्रोक्षणताडनंकुशैः ॥ १२ ॥ वर्म्मणाभ्युक्षिनासिच्यलिखेद्यंत्रंतदन्तरे ॥ वह्निकोणषडस्राष्टदलभूमंदिरात्मकम् ॥१३॥ मध्येतारपुटां[3]मायांलिखित्वापीठमर्चयेत् ॥ मंडूकात्परतत्वांतंपीठशक्तीर्जयादिकाः ॥ ११४ ॥

विधिमाह । प्राणायाममिति ॥ १११ ॥ अंत्रफट्वर्मणाहुंकारेण ॥ भूमंदिरंचतुष्कोणम् ॥ ११२ ॥ ११३ ॥ ११४ ॥

१ क्षकारादिकाकारांतानितिनवस्थानादारभ्यविलोमक्रमेणसंहारन्यासः । मालादक्षे । विद्याभावे । २ लक्षाधीश इति शेषः । मध्ये मध्यकोष्ठेतथा पूर्वोक्तप्रकारेण नवधाविभज्यपूर्वादिक्रमेणद्वौद्वौस्वरौ लिखेत् ।

१ त्रिकालस्नायी । २ स्त्रीत्यादि अन्यभावेऽन्यस्यैवप्रपंचइतिनपौनरुक्त्यम् । ३ ॐ ह्रीं ॐ ।

॥ ११५ ॥ ११६ ॥ ११७ ॥ क्रव्यादांशंमांसाशिनोवह्नेर्यस्तत्रभागस्तमस्त्रेण त्यजेत् ॥ ११८ ॥ ११९ ॥ वह्निबीजात्

वांगाशीवागीश्वरयोर्योगपीठात्मनेनमः ॥ मायादिकः पीठमंत्रस्तयोस्तेनासनं दिशेत् ॥ ११५ ॥ यजेत्तौतारमायाभ्यांगंधाद्यैरुपचारकैः ॥ लक्ष्मीनारायणौत्वचैद्वैष्णवेहोमकर्मणि ॥ १६ ॥ सूर्यकांतादरणितः श्रोत्रियागारतोपिवा ॥ पात्रेणपिहितेपात्रेवह्निमानाययेत्ततः ॥ १७ ॥ अस्त्रेणादायतत्पात्रंवर्मणोद्घाटयेत्तुतम् ॥ अस्त्रमंत्रेणनैर्ऋत्येक्रव्यादांशंततस्त्यजेत् ॥ १८ ॥ मूलेनपुरतोधृत्वासंस्कारांश्चततश्चरेत् ॥ वीक्षणाद्यान्पुराप्रोक्तानल्पंप्रोक्षणमाचरन् ॥ १९ ॥ परमात्मानलेनाथजाठरेणापिवह्निना ॥ स्मरन्नैक्यंवह्निबीजाच्चेतन्यंयोजयेत्ततः ॥१२०॥ तारेणचाभिमंत्र्याग्निंसुधयाधेनुमुद्रया ॥ अमृतीकृत्यसंरक्षेदस्त्रमंत्रेणमंत्रवित् ॥ २१ ॥ मुद्रयात्ववगुंठिन्याकवचेनावगुंठयेत् ॥ कुंडोपरिततोवह्निंभ्रामयेत्रिध्रुवं (ॐ) पठन् ॥ २२ ॥

रमितिबीजात् ॥ १२० ॥ सुधया वंबीजेन । धेनुमुद्रालक्षणंवक्ष्यते ॥ १२१ ॥ अवगुंठिन्या अपि वक्ष्यते ॥ कवचेन हुं बीजेन । त्रिध्रुवं प्रणवम् ॥ १२२ ॥

॥१२३॥ १२४ ॥ नवार्णमुद्धरति ॥ अर्धेशेन्दुःऊः ॥ गगनंहः । शेषंस्वरूपम् ॥ हृदयांतोनमोंतः ॥ नहूवाह्नचैतन्यायनमइत्यग्निस्थापनेनवाक्षरोमंत्रः ॥ १२५ ॥ विश्राण्य दत्त्वा ॥१२६॥ चतुर्विंशतिवर्णमुद्धरति । चिदिति ॥ चित्पिंगलहन २ दह २ पच २ सर्वज्ञाज्ञापयस्वाहा । वेद ४ भुजा २ शरश्चतुर्विंशति वर्णाः ॥ १२७ ॥ ज्वालिनीमुद्रालक्षणम्–मणिबंधयुतौकृत्वाप्रसृतांगुलिकौकरौ ॥ कनिष्ठः

शय्यागतामृतुस्नातांनीलेंदीवरधारिणीम् ॥ देवेनभुज्यमानांतांस्मृत्वातद्योनिमंडले ॥ १२३ ॥ ईशरेतोधियावह्निंस्थापयेदात्मसंमुखम् ॥ मूलंनवार्णंचपठन्जानुस्पृष्टधरातलः ॥ २४ ॥ रेफार्धेशेंदुसंयुक्तंगगनंवह्निचै ततः ॥ तन्यायहृदयांतोयंनवार्णोग्निनिधापने ॥ २५ ॥ विश्राण्याचमनंदेवीदेवयोर्ज्वालयेद्वसुम् ॥ चतुर्विंशतिवर्णेनमन्त्रेणश्रपणादिभिः ॥ २६ ॥ चित्पिंगलहनद्वंद्वंदहयुग्मंपचद्वयम् ॥ सर्वज्ञाज्ञापयस्वाहामन्त्रोवेदभुजाक्षरः ॥ २७ ॥ प्रदर्श्यज्वालिनींमुद्रामुत्थायविहितांजलिः ॥ श्लोकरूपेणमन्त्रेणह्युपतिष्ठेद्धुताशनम् ॥ १२८ ॥

गुष्ठयुगलेमिलित्वांतःप्रसारिते ॥ ज्वालिनीनाममुद्रेयंवैश्वानरप्रियंकरीति ॥ १२८ ॥

---

१ ॐ ह्रींवागीशीवागीस्वरयोर्योगपीठात्मनेनमः । ॐ ह्रींलक्ष्मीनारायणाभ्यां नमः ।

१ हूं वह्निचैतन्यायनमः । २ अग्निम् । ३ काण्डादिभिः ।

श्लोकरूपंमंत्रमाह ॥ १२९ ॥ अग्निमंत्रमाह ॥ वैश्वानरजातवेदइहावहलोहिताक्षसवकर्माणिसाधयस्वाहति ॥ १३० ॥ १३१ ॥ ठद्वयंस्वाहा १३२ ङेन्ताश्चतुर्थ्यंताः ॥ १३३ ॥ जिह्वाबीजान्युद्धरति ॥ दीपिकेति ॥ दीपिकाऊ ॥ अनलोरः ॥ वायुर्यः ॥ एतेषु स्थिताःसकाराद्याविलोमवर्णाः॥षसशवलरयतिसिंदवोनुस्वाराद्याइमेसप्तहिरण्यादिजिह्वानांबीजानीत्यर्थः ॥ ततश्चस्प्रूंहिरण्यायैनमः ॥

अग्निंप्रज्वलितंवंदेजातवेदंहुताशनम् ॥ सुवर्णवर्णममलंसमिद्धंविश्वतोमुखम् ॥ १२९ ॥ अथाग्निमंत्रं विन्यस्येत्तद्विधानमुदीर्यते ॥ वैश्वानरांतेजातेतिवेदांतेस्यादिहावह ॥ १३० ॥ लोहिताक्षपदात्सर्व कर्माण्यंतेतुसाधय ॥ वह्निप्रियांतोमंत्रोयंषड्विंशत्यक्षरान्वितः ॥ ३१ ॥ ऋषिश्छंदोदेवतास्यभृगुर्गा यत्रपावकाः ॥ रंबीजंठद्वयंशक्तिर्हवनेविनियोजनम् ॥ ३२ ॥ लिंगेपायौमूर्ध्निवक्त्रेनसिनेत्रेखिलांगके ॥ वह्नेर्जिह्वाःस्वबीजाढ्यान्यसेन्ङेन्तानमोन्विताः ॥ ३३ ॥ हिरण्यागगनारक्ताकृष्णासुप्रभयान्विता ॥ बहुरूपातिरक्तेतिजिह्वादमुनसोमताः ॥ ३४ ॥ दीपिकानलवायुस्थाःसाद्यावर्णाविलोमतः ॥ सेन्दवः सप्तजिह्वानांसप्तानांबीजतांगताः ॥ १३५ ॥

ष्प्रूंगगनायैनमः ॥ श्फ्रूंरक्तायैनमः ॥ व्य्रूंकृष्णायै नमः ॥ ल्र्रूंसुप्रायैनमः ॥ र्य्रूंबहुरूपायै नमः ॥ य्प्रूंअतिरक्तायैनमः ॥ १३४ ॥ १३५ ॥ गीर्वाणादयोजिह्वाधिदेवाजिह्वास्थानेपुन्यस्याः ॥ सुरेभ्योनमः लिंगे इत्यादिप्रयोगः ॥ १३६ ॥ मस्तकं शिरोमंत्रः ॥ १३७ ॥ १३८ ॥ ॥ १३९ ॥ ॥१४० ॥ तारेति ॥ प्रणवाग्नयेपदपूर्वाः ॥ ङनमोंताः ॐअग्नजातवेदसेनमोमूर्ध्नीत्यादि ॥ १४१ ॥ १४२ ॥ हाटकरेत

गीर्वाणपितृगंधर्वयक्षनागपिशाचकाः ॥ राक्षसाश्चेतिजिह्वानांदेवतास्तत्स्थलेन्यसेत् ॥ १३६ ॥ न्यासे[2] चनेव्युत्क्रमःस्याद्बहुरूपातिरिक्तयोः ॥ नेत्रेतिरिक्तान्यस्तव्यासर्वांगेबहुरूपिका ॥ ३७ ॥ सहस्रार्चिषेह दयंस्वस्तिपूर्णायमस्तकम् ॥ उत्तिष्ठपुरुषायेतिशिखामन्त्रोयमीरितः ॥ ३८ ॥ धूमांतेव्यापिनेवर्मसप्त जिह्वायनेत्रकम् ॥ अस्त्रंधनुर्धरायेतिषडंगानिसमाचरेत् ॥ ३९ ॥ मूर्ध्निवामेंसकेपार्श्वेकटौलिंगेकटौपुनः ॥ दक्षेपार्श्वेंसकेन्यस्येन्मतार्ष्टौविभावसोः ॥ १४० ॥ तारान्वयेपदाद्यास्ताश्चतुर्थीनमसान्विताः ॥ जातवे दाःसप्तजिह्वोहव्यवाहनइत्यपि ॥ ४१ ॥ अश्वोदरजसंज्ञोन्यस्तथावैश्वानराह्वयः ॥ कौमारतेजाःस्याद्विश्वमु खोदेवमुखस्तथा ॥ ४२ ॥ ततोंन्यसेन्निजेदेहेपीठंडाटकरेतसः ॥ वह्निमंडलपर्यंतंमंडूकादियथोदितम् ॥ १४३ ॥

सोवह्नेः ॥ मंडलपयतमंवपीठदेवताः पूज्याः ॥ ततः पीताद्याः पीठशक्तयः ॥ १४३ ॥

---

१ अग्नेःसप्तजिह्वानामानि । २ स्प्रष्प्रंश्प्रंव्प्रंल्प्रंप्रंय्प्रंअग्नेर्जिह्वाबीजानि ।

१ जिह्वाधिदेवतानामानि । २ प्रयोगस्तुस्प्रूंष्प्रूंश्प्रूंव्प्रूंल्प्रूंर्प्रूंय्प्रूंहिरण्यायैनमोलिंगेष्प्रूंगगनायैनमःपायौइत्यादि । धूमव्यापिनेकवचायहुम् । ४ अग्नये जात वेदसे मूर्ध्नि इत्यादि ।

१४४ ॥ बीजमिति ॥ रंवह्न्यासनाय नमः इतिपीठमंत्रः ॥१४५॥ ध्यानमाह ॥ त्रिनेत्रमिति ॥ वरस्वस्तिका दक्षयोः॥ अभीतिशक्ती

पीताश्वेतारुणाकृष्णाधूम्रातीव्रास्फुलिंगिनी ॥ रुचिराज्वालिनीचेतिकृशानोःपीठशक्तयः ॥ १४४ ॥ बीजवह्न्यासनायेतिहृदंतःपीठमंत्रकः ॥ एवंविन्यस्यपीठान्तंपावकंचिंतयेत्तनौ ॥ ४५ ॥ त्रिनेत्रमारक्ततनुंसुशुक्लवस्त्रंसुवर्णस्रजमग्निमीडे ॥ वराभयस्वस्तिकशक्तिहस्तंपद्मस्थमाकल्पसमूहयुक्तम् ॥ ४६ ॥ एवंध्यात्वार्चनंकुर्यान्मानसंविधिवद्वसोः ॥ परिषिंचेत्ततस्तोयैःकुण्डंस्थंडिलमेववा ॥ ४७ ॥ दर्भैःपरिस्तरेदग्निंप्रागग्रैरुदगग्रकैः ॥ प्रत्यग्दक्षिणसौम्यासुन्यसेत्रीन्परिधीन्क्रमात् ॥ ४८ ॥ पालाशान्बिल्वजांस्तेषुब्रह्मविष्णुशिवान्यजेत् ॥ वह्नौतत्पीठमभ्यर्च्यावाहयेत्स्वहृदोनलम् ॥ ४९ ॥ गंधादिभिःसमभ्यर्च्यपूजयेत्पावकंव्रती ॥ षट्सुकोणेषुमध्येचजिह्वास्तद्देवतायजेत् ॥ १५० ॥ ईशानादिषुवाय्वंतकोणेषुषट्समर्चयेत् ॥ हिरण्यायतिरक्तांतामध्येतुबहुरूपिणीम् ॥ ५१ ॥ केसरेष्वंगपूजास्याद्दलेष्वष्टसुमूर्तयः ॥ मातरोष्टौदलांतेषुभैरवाःस्युस्तदग्रतः ॥ १५२ ॥

वामयोः ॥ आकल्पाआभरणानितत्संघयुतम् ॥ १४६ ॥ १४७ ॥ १४८ ॥ १४९ ॥ १५० ॥ १५१ ॥ १५२ ॥

॥१५३॥ भैरवानाह ॥ असितांगइति ॥ १५४ ॥ १५५ ॥ १५६ ॥ १५७ ॥ तीर्थमंत्रेण ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिजलेस्मिन्संनिधिंकुर्वित्यनेन ॥ सृण्याअंकुशमुद्रया ॥ ऋज्वींमध्यमिकांकृत्वातर्जनींमध्यपर्वणि ॥ संयोज्याकुंचये

धरापुरेतुशक्त्याद्यावज्राद्यायुधसंयुताः ॥ एवमावरणैर्युक्तंसप्तभिः पावकंयजेत् ॥ १५३ ॥ असितांगोरुरुश्चंडःक्रोधउन्मत्तसंज्ञकः ॥ कपालीभीषणश्चापिसंहारश्चाष्टभैरवाः ॥ ५४ ॥ वामेकुशानथास्तीर्यतत्रवस्तूनिनिःक्षिपेत् ॥ प्रणीताप्रोक्षणीपात्रेआज्यस्थालींस्रुवंस्रुचम् ॥ ५५ ॥ अधोमुखानिचैतानिहोमद्रव्यंघृतंकुशान् ॥ समिधःपंचपालाशीरन्यदप्युपयोगियत् ॥ ५६ ॥ कृत्वापवित्रेमूलेनप्रोक्षेत्तानिशुभांभसा ॥ उत्तानानिविधायाथप्रणीतांपूरयेज्जलैः ॥ ५७ ॥ तीर्थमंत्रेणतीर्थानिसृण्यातत्राह्वयेत्सुधीः ॥ पवित्रे ह्यक्षतांस्तत्रनिःक्षिप्योत्पवनंचरेत् ॥ ५८ ॥ अथोदीच्यांनिधायैतांप्रोक्षण्यांतज्जलंक्षिपेत् ॥ हवनीयंद्रव्यजातमुक्षेत्तोयैःपवित्रगः ॥ ५९ ॥ मूलेनमूलगायत्र्यायद्वाहृदयमंत्रतः ॥ दक्षिणेपीठमासाद्यतत्रब्रह्माणमाह्वयेत् ॥ १६० ॥

त्किंचिन्मुद्रयांकुशसंज्ञिकेतिलक्षणम् ॥ १५८ ॥ १५९ ॥ १६० ॥

अणिमाद्यां अष्टमेवक्ष्यंते ॥ ब्रह्ममंत्रमुद्धरति ॥ तारेति ॥ ॐनमोब्रह्मणे इति ॥ १६१ ॥ स्रुक्स्रुवसंस्कारमाह ॥ हस्ताभ्यामिति ॥ ॥ १६२ ॥ १६३ ॥ शक्तित्रयमाह ॥ इच्छेति ॥ दीर्घत्रयम् आईऊ । व्योम हः ॥ तत्पूर्वकांहांइच्छाशक्त्यैनमोमूले ॥ ह्रींज्ञानशक्त्यै

अणिमाद्याःसिद्धयोष्टौब्रह्मणःपीठदेवताः ॥ तारहृत्पूर्वकोङेन्तोब्रह्ममंत्रोस्यपूजने ॥१६१॥ हस्ताभ्यां स्रुक्स्रुवौधृत्वातापयेत्त्रिरधोमुखौ ॥ वामहस्तेनतौधृत्वादर्भैर्दक्षेणमार्जयेत् ॥६२॥ संप्रोक्ष्यप्रोक्षणीतोयैःप्रतप्यपूर्ववत्पुनः ॥ ॥ न्यस्याग्नौमार्जनान्दर्भास्तयोःशक्तित्रयंन्यसेत् ॥ ६३ ॥ इच्छाज्ञानक्रियासंज्ञाचतुर्थीनमसान्विता ॥ दीर्घत्रयदुयुग्व्योमपूर्वकंस्थानकत्रये ॥ ६४ ॥ हृदास्रुचिन्यसेच्छक्तिंस्रुवे शंभुंततस्तुतौ ॥ सूत्रत्रयेणसंवेष्ट्यसंपूज्यकुसुमादिभिः ॥ ६५ ॥ कुशोपरिन्यसेद्दक्षेतयोःसंस्कारईरितः ॥ अस्त्रोक्षितायामाज्यस्ययस्थाल्यामाज्यंविनिःक्षिपेत् ॥६६॥ वीक्षणादिसंस्कारसंस्कृतंमूलमंतः ॥ गोमुद्रयामृतीकृत्यषट्संस्कारांस्ततश्चरेत् ॥ १६७ ॥

नमःमध्ये ॥ हूंक्रियाशक्त्यैनमःअन्ते ॥ १६४ ॥ १६५ ॥ १६६ ॥ गोमुद्रा धेनुमुद्रा ॥ १६७ ॥
॥ १६८ ॥ १६९ ॥ १७० ॥ १७१ ॥ १७२ ॥ १७३ ॥ नाडीत्रयमिति ॥ इडापिंगलासुषुम्णाख्या ॥ तृतीयामध्येचिंत्या ॥ हृदा

कुंडोद्धृतेवायुकोणेस्थितेंगारे विनिःक्षिपेत् ॥ हृदेतितापनंप्रोक्तंदर्भयुग्मप्रदीपितम् ॥१६८॥ आज्येक्षिप्त्वाहृदावह्नौपवित्रीकरणंक्षिपेत् ॥ ६९ ॥ आज्यंनीराजयेद्दीप्तदर्भयुग्मेनवर्मणा ॥ अभिद्योतनमुक्तंतद्दीप्तदर्भत्रयं घृते ॥ १७० ॥ दर्शयेदस्त्रेणोद्द्योतेगृहीत्वाघृतपात्रकम् ॥ संयोज्याग्नौतदंगारान्स्लिलंसंस्पृशेत्सुधीः ॥ ७१ ॥ अंगुष्ठानामिकाभ्यांतुदर्भावादायनिःक्षिपेत् ॥ त्रिरग्निसंमुखेत्वाज्यमस्त्रेणोत्पवनंत्विदम् ॥ ७२ ॥ हृदात्मसंमुखंतद्वदाज्यक्षेपस्तुसप्लवः ॥ नीराजनादिसंस्कारेष्वग्नौदर्भान्विनिःक्षिपेत् ॥ ७३ ॥ दर्भद्वयंग्रंथियुतंघृतमध्येविनिःक्षिपेत् ॥ वामदक्षिणयोःपक्षौस्मृत्वानाडीत्रयंस्मरेत् ॥ दक्षिणाद्वामतोमध्याद्घृदादायघतंसुधीः ॥ ७४ ॥ अग्नयेग्निप्रियासोमायस्वाहेत्यग्निनेत्रयोः ॥ जुहुयादग्नीषोमाभ्यांस्वाहेत्यक्षिणतृतीयके ॥ १७५ ॥

नमइतिमंत्रेण ॥ १७४ ॥ अग्नयेस्वाहेतिदक्षनेत्रे ॥ सोमायस्वाहेतिवामे तदाहुतिचतुष्टयेनाग्नेर्नेत्रमुखप्रकाशोभवतीत्यर्थः ॥ १७५ ॥

---

१ ॐनमोब्रह्मणे । २ नमःशक्त्यै नमःशंभवे ।

॥ १७६ ॥ १७७ ॥ १७८ ॥ १७९ ॥ ॐ अस्याग्नेर्गर्भाधानसंस्कारंकरोमिस्वाहेत्यादि ॥ १८० ॥ पंचसमिधांहोमाद्वसोरग्नः नालाप नयनाख्यःसंस्कारः ॥ १८१ ॥ देवाभिधानेनदेवनाम्नाशुष्मणोग्नेर्नामपूर्ववत् ॥ घृताहुत्यष्टकेन कुर्यात्-रामाग्निकृष्णाग्निरित्यादि ॥

पातयेदाहुतेःशेषमाहुतिग्रहणस्थले॥भूयोहृदादक्षभागादादायाज्यंमुखेयजेत्॥ १७६ ॥अग्नयेस्विष्टकृते तन्नेत्रास्योद्घाटनंमतम् ॥ नरसिंहंविनाविष्णुंमन्त्रनेत्रद्वयंयजेत् ॥ ७७ ॥ नरसिंहान्यदेवेषुवह्नेर्नेत्रत्रयं स्मृतम् ॥ महाव्याहृतिभिर्व्यस्तसमस्ताभिश्चतुष्टयम् ॥ ७८ ॥ आहुतीनांत्रयंवह्निमंत्रेणैवततश्चरेत् ॥ घृताहुतिभिरष्टाभिरेकैकांसंस्कृतिंचरेत् ॥७९॥ ओमस्याग्नेरमुंसंस्कारंकरोम्यग्निवल्लभा ॥ इत्थंमनुंज ऽन्गर्भाधानंपुंसवनंततः ॥ १८० ॥ सीमंतोन्नयनजातकर्मकृत्वाततश्चरेत् ॥ वह्नौपचसमिद्धोमान्नाला ऽनयनंवसोः॥८१॥कुर्याद्देवाभिधानेनपूर्ववन्नामशुष्मणः॥नामानंतरमेतस्यपितरौस्वेर्पयेद्धृदि॥८२॥ अन्नप्राशंतथाचौलोपनयौदारयोजनम् ॥ संस्काराः स्युर्विवाहांतामृत्यंताक्रूरकर्मणि ॥ १८३ ॥

एतस्याग्नेः पितरौवागीशीवागीशौकुंडात्स्वहृदिन्यसेत् ॥ १८२ ॥ उपनयमुपवीतम् । दारयोजनं विवाहः ॥ १८३ ॥

॥ १८४ ॥ १८५ ॥ कुसुमंपुष्पम् ॥ १८६ ॥ दशधाव्यस्तेनविभक्तेन ॥ १८७ ॥ तमेवविभागमाह ॥ पूर्वेति ॥ बीजषट्कम् ॥ बाणाःपंचवर्णाः ॥ सायकाःपंचव ॥ मुनयःसप्त ॥ मार्गणाःपंच ॥ गणेशमंत्रमाह ॥ तारइति ॥ तारः ॐ ॥ लक्ष्मीः श्रीं ॥ गिरि

एकैकामाहुतिंकुर्याद्वह्नेर्जिह्वांगमूर्तिभिः ॥ इंद्रादिभिश्चवज्राद्यैर्द्विठांतैर्जुहुयात्ततः ॥१८४॥ स्रुवेणाज्यं चतुर्वारंनिधायस्रुचितांसुधीः ॥ अपिधायस्रुवेणैतौगृह्णीयात्करयुग्मतः ॥ ८५ ॥ तिष्ठन्मूलंतयोर्नाभौ कृत्वाग्रेकुसुमंक्षिपेत् ॥ वामस्तनांतंतन्मूलंकृत्वाग्निमनुनासुधीः ॥ ८६ ॥ जुहुयाद्वौषडंतेनसंपत्त्यर्थ मतंद्रित ॥ महागणेशमंत्रेणव्यस्तेनदशधाततः ॥ ८७ ॥ जुहुयाच्चसमस्तेनचतुर्वारंघृताहुतीः ॥ पूर्व पूर्वयुतंबीजषट्कंबाणाश्चसायकाः ॥८८॥ मुनयोमार्गणाश्चेतिविभागस्तन्मनोःस्मृतः ॥ तारोलक्ष्मीर्गिरिसुताकामोभूर्गणनायकः ॥८९॥ चतुर्थ्यन्तोगणपतिर्वरांतेवरदेतिच ॥ सर्वांतेजनमित्युक्त्वामेवशांतेतुमानय॥१९०॥ स्वाहांतोवसुयुग्मार्णोमहागणपतेर्मनुः॥एवंकृत्वाग्निसंस्कारंपीठंदेवस्यपूजयेत्१९१॥

सुताह्रीं ॥ कामःक्लीं ॥ भूःग्लौं ॥ गणनायकःगं ॥ इति बीजषट्कम् ॥ गणपतयेवरवरदसर्वजनंमेवशमानयस्वाहेतिविभागाः पूर्वयुताकार्याः ॥ ॐॐ श्रीं ॐ श्रींह्री ॐ इत्यादि ॥ १८८ ॥ १८९ ॥ १९० ॥ १९१ ॥

---

१ भूःस्वाहा भुवःस्वाहा स्वःस्वाहा भूर्भुवःस्वःस्वाहा । २ वैश्वानरजातवेदइहावहलोहिताक्षसर्वकर्माणिसाधयस्वाहा ।

१ जिह्वेति । स्वदेवतानामप्युपलक्षणम् । २ श्रींह्रींक्लीं लगंगणपतयवरवरदसर्वजनंमेवशमानयस्वाहा । प्रयोगस्तु-ॐस्वाहा । ओ३म् श्रींस्वाहा ओ३म् श्रींह्रींस्वाहेत्यादि ।

आवाहनादिकाअग्रवक्तव्याः ॥ १९२ ॥ पञ्चनेत्रसंख्या पंचविंशतिः ॥ १९३ ॥ १९४ ॥ १९५ ॥ १९६ ॥ १९७॥ १९८॥

तत्रेष्टदेवमावाह्यमुद्राआवाहनादिकाः ॥ प्रदर्श्यवह्निरूपस्यदेवस्यवदनेपुनः ॥ १९२ ॥ मूलेनजुहुयात्पंचनेत्रसंख्याघृताहुतीः ॥ वक्त्रैकीकरणंत्वग्निर्देवयोस्तेनजायते ॥ ९३ ॥ नाडीसंधानसिद्ध्यर्थंवह्निदेवतयोस्ततः ॥ जुहुयान्मूलमंत्रेणरुद्रसंख्याघृताहुतिः ॥९४॥ इष्टदेवस्यावृतीनामेकैकामाहुतिंचरेत् ॥ ततस्तुमूलमंत्रेणदशधाजुहुयाद्घृतम् ॥ ९५॥ ततःकल्पोक्तद्रव्येणदशांशंजुहुयाज्जपात् ॥ होमंसमाप्यकुर्वीतपूर्णाहुतिमनन्यधीः ॥ ९६ ॥ होमावशिष्टेनाज्येनपूरयित्वास्रुचंसुधीः ॥ पुष्पंफलंनिधायाग्रेस्रुवेणाच्छाद्यतांपुनः ॥९७॥ उत्थितौवौषडंतेनमूलेनजुहुयाद्वसौ ॥ तद्द्रव्येणावृतीनांचजुहुयादाहुतिंपृथक् ॥९८॥ देवंविसृज्यस्वहृदिवह्नेर्जिह्वांगमूर्तिभिः ॥ जुहुयाद्व्याहृतीर्हुत्वाप्रोक्षेत्तत्प्रोक्षणीजलैः९९॥ संप्रार्थ्यानेनमनुनानत्वातंविसृजेद्धृदि ॥ भोभोवह्नेमहाशक्तेसर्वकर्मप्रसाधक ॥ २०० ॥ कर्मांतरेपिसंप्रातेसान्निध्यंकुरुसादरम् ॥ वह्नौपवित्रेनिःक्षिप्यप्रणीतांबुभुविक्षिपेत् ॥ २०१ ॥

॥ १९९ ॥ २०० ॥ पवित्रादिप्रतिपत्तिमाह ॥ वह्नाविति ॥ विधिंब्रह्माणंविसृज्यदक्षिणां दत्त्वेतिशेषः ॥ सकुशान्परिस्तरणसहितान्वसौवह्नौ ॥ २०१ ॥

तर्पणमंत्रमाह ॥ मूलमंत्रान्ते कृष्णंतर्पयामिनमइति तर्पणे ॥ कृष्णमभिषिंचामीत्यभिषेके ॥ २०२ ॥ जपाद्दशांशाद्धोमः तद्दशांशेनतर्पणतद्दशांशेनाभिषेकः तद्दशांशेनविप्रभोजनमितिपंचांगंपुरश्चरणमितिउत्तमः पक्षः ॥ अभिषेकवर्जोमध्यमः ॥ तर्पणाभिषेकवर्जत्र्यंगः

विधिंविसृज्यसकुशान्परिधीन्विन्यसेद्वसौ ॥ एवंहोमंसमाप्याथतर्प्पयेद्देवतांजले ॥२०२॥ आवाह्यतद्दशांशेनतर्पणादभिषेचनम् ॥ तर्पयामिनमश्चेतिद्वितीयांतेष्टपूर्वकम् ॥ ३ ॥ मूलांतेतुपदंदेयंसिंचामीत्यभिषेचने ॥ ततोनानाविधैरन्नैस्तर्पयेद्द्विजसत्तमान् ॥४॥ इष्टरूपान्समाराध्यतेभ्योदद्याच्चदक्षिणाम् ॥ न्यूनंसंपूर्णतामेतिब्राह्मणाराधनान्नृणाम् ॥ ५ ॥ देवताश्चप्रसीदंतिसंपद्यंतेमनोरथाः ॥ २०६ ॥

इतिश्रीमहीधरविरचितेमन्त्रमहोदधौभूतशुद्ध्यादिकथनंनामप्रथमस्तरंगः ॥ १ ॥ छ ॥

कनीयान्पक्षः होमदशांशद्विजभोजनमिति ॥ किं बहुना ॥ बहुब्राह्मणभोजनेदेवताप्रसादोनभवति किमिति ॥ २०३ ॥२०४॥२०५॥ ॥ २०६ ॥ इति श्रीमहीधरविरचितमंत्रमहोदधेःव्याख्यायां नौकायांभूतशुद्ध्यादिकथनंनामप्रथमस्तरंगः ॥ १ ॥

१ ब्रह्माणम् ।

आदौसकलविघ्ननिवर्तकस्यश्रीगणेशस्यमंत्रान्वक्तुंप्रतिजानीते ॥ गणेशस्येति॥मनून्मंत्रान् मन्यंतेसर्वे यैरिति । मंत्रमुद्धरति। जलंवः ॥ चक्रीकः ॥ वह्निरःरः ॥ तेनयुतःतेनयुक्तः ॥ कामिकात् ॥ कर्णद्वाढ्याउ ॥ बिंदुयुता ॥ तेनतुं ॥ दीर्घआ ॥ तेनयुतोदारकोडः ॥

गणेशस्यमनून्वक्ष्येसर्वाभीष्टप्रदायकान्॥जलं(व)चक्री(क)वह्नि(र) युतःकर्णद्वाढ्याचकामिका (तुं) १॥ दारको(ड)दीर्घसंयुक्तो(आ)वायुः(य)कवच(हुं)पश्चिमः ॥ षडक्षरोमंत्रराजोभजतामिष्टसिद्धिदः ॥२॥ भार्गवोमुनिरस्योक्तश्छंदोनुष्टुबुदाहृतः ॥ विघ्नेशोदेवताबीजंवंशक्तिर्यमितीरितम् ॥३॥ षडक्षरैः सविधुभिः प्रणवाद्यैर्नमोंतकैः ॥ प्रकुर्याज्जातिसंयुक्तैःषडंगविधिमुत्तमम् ॥ ४ ॥ भ्रूमध्यकंठहृदयनाभिलिंगपदेषु च ॥ मनोर्वर्णान्क्रमान्न्यस्यव्यापय्याथोस्मरेत्प्रभुम् ॥५॥ उद्यद्दिनेश्वररुचिंनिजहस्तपद्मैःपाशांकुशाभयवरान्दधतंगजास्यम् ॥ रक्तांबरंसकलदुःखहरंगणेशंध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ॥६॥

वायुर्यः ॥ कवचपश्चिममंतेयस्यसतथा ॥ वक्रतुंडायहुमितिसविधुभिः सानुस्वारैः ॥ ॐवंनमःहृदयायनमःइत्यादि ॥ व्यापय्यसर्वमंत्रं सर्वशरीरेन्यस्येत्यर्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ध्यानमाह । उद्यदिति ॥ पाशाभयेवामयोः ॥ वरांकुशावन्ययोः ॥ ६ ॥ वाडवान्विप्रान् ॥ ७ ॥ द्रव्याष्टकमाह इक्षवइति ॥ ८ ॥ ९ ॥ पीठमंत्रमाह ॥ गंसर्वशक्तिकमलासनाय नमः एतंनासनंदत्त्वातद्देशे

ऋतुलक्षंजपेन्मंत्रमष्टद्रव्यैर्दशांशतः ॥ जुहुयान्मंत्रसंसिद्ध्यैवाडवान्भोजयेच्छुचीन् ॥ ७ ॥ इक्षवःसक्तवोरंभाफलानिचिपिटास्तिलाः ॥ मोदकानारिकेलानिलाजाद्रव्याष्टकंस्मृतम् ॥ ८ ॥ पीठमाधारशक्त्यादिपरतत्त्वांतमर्चयेत् ॥ तत्राष्टदिक्षुमध्येचसंपूज्यानवशक्तयः ॥ ९ ॥ तीव्राचचालिनीनंदाभोगदाकामरूपिणी ॥ उग्रातेजोवतीसत्यानवमीविघ्ननाशिनी ॥ १० ॥ विनायकस्यमंत्राणामेताःस्युःपीठशक्तयः ॥ सर्वशक्तिकमलांतेतुलासनायहृदंतिकः ॥११॥ पीठमंत्रस्तदीयेनबीजेनादौसमन्वितः ॥ प्रदायासनमेतेनमूर्तिमूलेनकल्पयेत् ॥१२॥ तस्यांगणेशमावाह्यपूजयेदासनादिभिः ॥ अभ्यर्च्यकुसुमैरीशंकुर्यादावरणार्चनम् ॥ १३ ॥ आग्नेयादिषुकोणेषुहृदयंचशिरःशिखाम् ॥ वर्माभ्यर्च्याग्रतोनेत्रंदिक्ष्वस्त्रंपूजयेत्सुधीः ॥ १४ ॥ द्वितीयावरणेपूज्याःप्रागाद्यष्टवशक्तयः ॥ विद्यादिमांविधात्रीचभोगदाविघ्नघातिनी ॥ १५ ॥ निधिप्रदीपापापघ्नीपुण्यापश्चाच्छशिप्रभा ॥ दलाग्रेषुवक्रतुंडएकदंष्ट्रोमहोदरः ॥१६॥ गजास्यलंबोदरकौविकटोविघ्नराजकः ॥ धूम्रवर्णस्तदग्रेषुशक्राद्याआयुधैर्युताः ॥ १७ ॥

मूलेनमूर्तिकल्पयेन ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

---

१ वक्रतुंडायहुं । २ अस्यश्रीगणेशमंत्रस्यभार्गवऋषिरनुष्टुप्छंदः विघ्नेशोदेवतावंबीजंशक्तिर्ममाभीष्टसिद्धयेजपेविनियोगः ।

॥ १८ ॥ प्रयोगानाह ॥ ब्रह्मेति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ मंडलादेकोनपंचाशद्दिमध्येइष्टंप्राप्नुयात् ॥ २५ ॥ मंत्रांतरमाह ॥ रायस्पोषेति स्वरूपं भृगुःसः ॥ याढथोयकारयुतः ॥ मेषोन ॥ सात्वतोधू ॥ तौसदृशौइयुतौ ॥ गगनंहः रतिर्णः ॥

एवमावरणैःपूज्यःपंचभिर्गणनायकः ॥ पूर्वोक्ताचपुरश्चर्याकार्यामंत्रस्यसिद्धये ॥ १८ ॥ ततःसिद्धेमनौ काम्यान्प्रयोगान्साधयेन्निजान् ॥ ब्रह्मचर्यरतोमंत्रीजपेद्दविसहस्रकम् ॥१९॥ षण्मासमध्याद्दारिद्र्यंना शयत्येवनिश्चितम् ॥ चतुर्थ्यादिचतुर्थ्यंतंजपेद्दशसहस्रकम्॥२०॥प्रत्यहंजुहुयादष्टोत्तरंशतमतंद्रितः ॥ पूर्वोक्तफलमाप्नोतिषण्मासाद्भक्तितत्परः ॥२१॥ आज्याक्तान्नस्यहोमेनभवेद्धनसमृद्धिमान्॥पृथुकैर्ना रिकेलैर्वामरिचैर्वासहस्रकम्॥॥२२॥ प्रत्यहंजुह्वतोमासाज्जायतेधनसंचयः॥ जीरसिंधुमरीचाक्तैरष्टद्रव्यैः सहस्रकम् ॥ २३ ॥ जुह्वन्प्रतिदिनंपक्षात्स्यात्कुबेरइवार्थवान् ॥ चतुःशतं ४४४ चतुश्चत्वारिंशदा ह्वयंदिनेदिने ॥२४॥ तर्पयेन्मूलमंत्रेणमंडलादिष्टमाप्नुयात् ॥ अथ मंत्रांतरंवक्ष्येसाधकानांनिधिप्रदम् ॥ २५ ॥ रायस्पोषभृगुर्याढ्योददितामेषसात्वतो ॥ सदृशौदोरत्नधातुमान्रक्षोगगनंरतिः ॥ २६ ॥

ससधाऊँयुताः ॥ शार्ङ्गीगः ॥ खंहः ॥ अन्यत्स्वरूपम् ॥ षडक्षरःपूर्वोक्तः यथा रायस्पोषस्यददितानिधिदोरत्नधातुमान्रक्षोहणोवलगह नोवक्रतुंडायहुमित्येकत्रिंशद्वर्णः ॥ २६ ॥

॥ २७ ॥ २८ ॥ पूर्ववत्षड्वर्णवत् ॥ २९ ॥ मंत्रांतरमाह ॥ पद्मेति ॥ भानुर्मः पद्मनाभए ॥ तद्युतःमे । धाधः ॥ सघओं३म् ॥ तद्युतालकौलकारककारौ ॥ अनंतमाकारमारूढौ ॥ वायुर्यः ॥ पावकगेहिनीस्वाहा ॥ मेघोल्कायस्वाहेतिषड्वर्णः ॥ ३० ॥ मंत्रांत रमाह ॥ लकुलीति ॥ लकुलीहकारः ॥ भृगुतौसकारतकारौदशमारूढौइकारयुतौ तेनस्ति । लोहितःपःसदृक् इयुतः ॥ वकः

ससधावलशार्ङ्गीखंनोषडक्षरसंयुतः ॥ एकत्रिंशद्वर्णयुक्तोमंत्रोभीष्टप्रदायकः ॥ २७ ॥ सायकै[1]स्त्रिभि रष्टाभिश्चतुर्भिःपंचभीरसैः ॥ मंत्रोत्थितैःक्रमाद्वर्णैःषडंगंसमुदीरितम् ॥ २८ ॥ ऋष्याद्यर्चाप्रयोगाः स्युःपूर्ववन्निधिदोह्ययम् ॥ पद्मनाभयुतोभानुर्मेधा[2]सघसमन्विता ॥ २९ ॥ लकावनंतमारूढौवायुः पावकमोहिनी ॥ षडक्षरोयमादिष्टोभजतामिष्टदोमनुः ॥ ३० ॥ पूर्ववत्सर्वमेतस्यसमाराधनमीरितम् ॥ लकुलीदशमारूढौभृगुतौलोहितःसदृक् ॥ ३१ ॥ वकःसदीर्घश्चःसाक्षिर्लिखेन्मंत्रःशिरोंतिमः ॥ नवा[3]क्षरोमनुश्चास्यकंकोलः परिकीर्तितः ॥ ३२ ॥

शः ॥ सदीर्घःआयुतः ॥ चस्वरूपम् ॥ साक्षीइयुतः ॥ लिखेस्वरूपंशिरोंतिकस्वाहांतः ॥ हस्तिपिशाचिलिख स्वाहेतिनवार्णः ॥ ३१ ॥ ३२ ॥

---

१ रायस्पोषस्यददितानिधिदोरत्नधातुमानरक्षोहणोवलगहनोवक्रतुंडायहुम् । २ मेघोल्कायस्वाहा । ३ हस्तिपिशाचिलिखेस्वाहा ।

पञ्चांगमाह ॥ द्वाभ्यामिति ॥ हरितहृदयायनमइत्यादि ॥ ३३ ॥ ध्यानमाह ॥ चतुर्भुजमिति ॥ अंकुशमोदकपात्रेद



विराट्छंदोदेवतातुस्याद्वैचोच्छिष्टनायकः ॥ द्वाभ्यांत्रिभिर्द्वयेनाथद्वाभ्यांसकलमंत्रतः ॥ ३३ ॥ पंचांगान्यस्यकुर्वीतध्यायेत्तंशशिशेखरम् ॥ चतुर्भुजंरक्ततनुंत्रिनेत्रंपाशांकुशौमोदकपात्रदंतौ ॥ करैर्दधानंसरसीरुहस्थमुन्मत्तमुच्छिष्टगणेशमीडे ॥ ३४ ॥ लक्षमेकंजपेन्मंत्रंदशांशंजुहुयात्तिलैः ॥ पूर्वोक्तेपूजयेत्पीठेविधिनोच्छिष्टविघ्नपम् ॥ ३५ ॥ आदावंगानिसंपूज्यब्रह्माद्यान्दिक्षुपूजयेत् ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीपरा ॥ ३६ ॥ वाराहीचतथेंद्राणीचामुंडारमयासह ॥ ककुप्सुवक्रतुंडाद्यान्दशसुप्रतिपूजयेत् ॥ ३७ ॥ वक्रतुंडैकदंष्ट्रौचतथालंबोदराभिधः ॥ विकटोधूम्रवर्णश्चविघ्नश्चापिगजाननः ॥ ॥ ३८ ॥ विनायकोगणपतिर्हस्तिदंताभिधोंतिमः ॥ इंद्राद्यानपिवज्राद्यान्पूजयेदावृतिद्वये ॥ ३९ ॥ एवंसिद्धमनोर्मंत्रीप्रयोगान्कर्तुमर्हति ॥ स्वांगुष्ठप्रतिमांकृत्वाकपिनासितभानुना ॥ ४० ॥

क्षयोः ॥ अन्ययोरन्ये ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ प्रयोगानाह ॥ स्वेति ॥ कपिनारक्तचंदनेन ॥ सितभानुनाश्वेतार्केणवाप्रतिमाकार्या ॥ ४० ॥

४१ ॥ ४२ ॥ अनावृतोनिर्वस्त्रः ॥ ४३ ॥ ४४ ॥ वल्मीकमृत्तिकाप्रतिमैवंपूजितालाभदेति ॥ ४५ ॥ ४६ ॥

गणेशप्रतिमां रम्यामुक्तलक्षणलक्षिताम् ॥ प्रतिष्ठाप्यविधानेनमधुनास्नापयेचताम् ॥ ४१ ॥ आरभ्यकृष्णभूतादियावच्छुक्लाचतुर्दशी ॥ सगुडंपायसंतस्यैनिवेद्यप्रजपेन्मनुम् ॥ ४२ ॥ सहस्रंप्रत्यहंतावज्जुहुयात्सघृतैस्तिलैः ॥ गणेशोहमितिध्यायन्नुच्छिष्टेनावृतोरहः ॥४३॥ पक्षाद्राज्यमवाप्नोति नृपजोन्योपिवानरः॥कुलालमृत्स्नाप्रतिमापूजितैवंसुराज्यदा॥४४॥ वल्मीकमृत्कृतालाभमेवमिष्टान्मयच्छति ॥ गौडीसौभाग्यदासैवंलावणीक्षोभयेदरीन् ॥ ४५ ॥ निंबजानाशयेच्छत्रून्प्रतिमैवंसमर्चिता ॥ मधूकैर्होमतोलाजैर्वशयेदखिलंजगत् ॥ ४६ ॥ सुप्तोधिशय्यमुच्छिष्टोजपञ्छत्रून्वशंनयेत् ॥ कटुतैलान्वितैराजीपुष्पैर्विद्वेषयेदरीन् ॥ ४७ ॥ द्यूतेविवादेसमरेजप्तोयंजयमावहेत् ॥ कुबेरोस्यमनोर्जापान्निधीनांस्वामितामयात् ॥ ४८ ॥ लेभातेराज्यमनरिवानरेशबिभीषणौ ॥ रक्तवस्त्रांगरागाढ्यस्तांबूलंनिश्वदञ्जपेत् ॥४९॥ यद्वानिवेदितंतस्मैमोदकंभक्षयञ्जपेत् ॥ पिशितंवाफलंवापितेनतेनबलिंहरेत् ॥ ५० ॥



अधिशय्यंशय्यायाम् ॥ कटुतैलंसर्षपतैलम् ॥ ४७ ॥ ४८ ॥ अनरिशत्रुहीनम् ॥ ४९ ॥ तेनताम्बूलादिना ॥ ५०

१ गणेशम् ।

१ घृतमधुशर्करावृत्तैः ।

बलिमंत्रमाह ॥ स्मृतिर्गः ॥ सेन्दुस्सानुस्वारः ॥ आकाशंहः ॥ तथासानुस्वारः । सृष्टिलौककारलकारौ ॥ कीदृशौ मन्वि द्वाढयौऔकारानुस्वारयुतौ । तेनक्लौं ॥ पंचांतकशिवौगकारलकारौतद्वन्मन्विद्वाढयौंग्लौं ॥ उच्छिष्टगस्वरूपम् ॥ भगा न्वितःउमाकांतः ॥ एकारयुतोणःणे ॥ सबिंदुर्यःसानुस्वारोयकारः ॥ अन्यत्स्वरूपम् ॥ मन्त्रोयथा ॥ गंहंक्लौंग्लौंउच्छिष्ट गणेशायमहायक्षायायंबलिः इत्येकोनविंशत्यर्णोबलिमंत्रः ॥ ५१ ॥ ५२ ॥ मंत्रांतरमाह ॥ ध्रुव इति ॥ ध्रुव ओं ।

सेंदुःस्मृतिस्तथाकाशंमन्विवद्वाढयौचसृष्टिलौ ॥ पंचांतकशिवौतद्वदुच्छिष्टगभगान्वितः ॥५१॥ उमा कांतःश्यायमांतेहायक्षायासबिंदुयः ॥ बलिरित्येषकथितोनवेंद्वर्णोबलेर्मनुः ॥ ५२ ॥ ध्रुवोमायासेंदुशा र्ङ्गिर्बीजाढ्योनववर्णकः ॥ द्वादशार्णोमनुः प्रोक्तःसर्वमस्यनवार्णवत् ॥ ५३ ॥ ताराद्यश्चगणेशाद्योनवा र्णोदशवर्णकः ॥ द्विविधोस्योपासनंतुप्रोक्तमन्यन्नवार्णवत् ॥ ५४ ॥

मायाह्रीं । शार्ङ्गिगःसेंदुःअनुस्वारसहितः ॥ गंत्रिबीजाढ्यः ॥ स्पष्टम् । यथा ओं ह्रींगंहस्तिपिशाचिलिखेस्वाहेतिद्वादशार्णः ॥ ५३ ॥ ताराद्योयथा ॥ ओं हस्तिपिशाचिलिखेस्वाहा ॥ गणेशाद्योयथा ॥ गंहस्तिपिशाचिलिखेस्वाहा ॥ ५४ ॥ मन्त्रान्तरमाह ॥ ध्रुवेति ॥ ध्रुवःप्रणवः हृन्नमः स्वरूपमन्यत् ॥ मन्त्रः ॥ ओंनमउच्छिष्टगणेशायहस्तिपिशाचिलिखे स्वाहा इत्येकोनविंशतिवर्णः ॥ मुन्यादीति ॥ ऋषिश्छंदोदेवताःनवार्णवत् ॥ ५५ ॥ षडंगमाह ॥ त्रिभिरिति ॥ अर्च्चनंपुरापूर्ववदि- त्यर्थः ॥ ५६ ॥ मंत्रांतरमाह ॥ तारइति ॥ झिंटीशः ए ॥ चतुराननः कः ॥ दीर्घवियत् हा ॥ पाशआं ॥

ध्रुवोहृदुच्छिष्टगणेशायतेतुनवाक्षरः ॥ एकोनविंशत्यर्णाढ्योमनुर्मुन्यादिपूर्ववत् ॥ ५५ ॥ त्रिभिःसप्त भिरक्षिभ्यांत्रिभिर्द्वाभ्यांद्वयेनच ॥ मंत्रोत्थितःसुधीर्वर्णैःकुर्यादंगंपुरार्चनम् ॥ ५६ ॥ तारोनमोभगवते झिंटीशश्चतुराननः ॥ दंष्ट्रायहस्तिमुखायलंबोदरायच ॥ ५७ ॥ उच्छिष्टमवियद्दीर्घात्मनेपाशों कुशःपरा ॥ सेंदुःशार्ङ्गीभगयुतेद्वेमेधेवह्निकामिनी ॥ ५८ ॥ उच्छिष्टगणनाथस्यमनुरद्रिगुणाक्षरः ॥ गणकोमुनिराख्यातोगायत्रीच्छन्दईरितः ॥ ५९ ॥

अंकुश क्रो पराह्रीं ॥ सेन्दुशार्ङ्गीगं ॥ भगयुतेद्वेमेधे ॥ एकारयुतघद्वयम् ॥ वह्निकामिनीस्वाहा ॥ अन्यत्स्व रूपम् ॥ ओंश्म् नमोभगवतेएकदंष्ट्रायहस्तिमुखायलम्बोदरायउच्छिष्टमहात्मनेआंक्रोंह्रींगंघेघेस्वाहा ॥ अद्रिगुणाक्षरःसप्तत्रिं शदक्षरः ॥ ५७ ॥ ५८ ॥ ५९ ॥

षडंगमाह ॥ सप्तेति ॥ ६० ॥ ध्यानमाह ॥ शरानिति ॥ धनुःपाशौवामयोः ॥ शरांकुशौदक्षयोः ॥ ६१ ॥ ६२ ॥

उच्छिष्टगणपोदेवोजपेदुच्छिष्टएवतम् ॥ सप्तदिग्बाणसप्ताब्धियुगार्णैरङ्गकंमनोः ॥ ६० ॥ शरान्धनुः पाशसृणीस्वहस्तैर्दधानमारक्तसरोरुहस्थम् ॥ विवस्त्रमत्न्यांसुरतप्रवृत्तमुच्छिष्टमम्बासुतमाश्रयेहम् ॥ ॥ ६१ ॥ लक्षंजपेद्धृतैर्हुत्वातद्दशांशंप्रपूजयेत् ॥ पूर्वोक्तपीठेस्वाभीष्टसिद्धयेपूर्ववद्विभुम् ॥ ६२ ॥ कृष्णाष्टम्यादितद्भूतंयावत्तावज्जपेन्मनुम् ॥ प्रत्यहंसाष्टसाहस्रंजुहुयात्तद्दशांशतः ॥ ६३ ॥ तर्पयेदपिमं त्रीयंसिद्धिमेवंप्रयच्छति ॥ धनंधान्यंसुतान्पौत्रान्सौभाग्यमतुलंयशः ॥ ६४ ॥ मूर्तिंकुर्याद्गणेशस्यशु भाहेनिम्बदारुणा ॥ प्राणप्रतिष्ठांकृत्वाथतदग्रेमंत्रमाजपेत् ॥ ६५ ॥ यंध्यात्वादासवत्सोपिवश्योभवति निश्चितम् ॥ नदीजलंसमादायसप्तविंशतिसंख्यया ॥ ६६ ॥ मंत्रयित्वामुखंतेनप्रक्षाल्येशसभांव्रजेत् ॥ पश्येद्यंदृश्यतेयेनसवश्योजायतेक्षणात् ॥ ६७ ॥ चतुःसहस्रंधत्तूरपुष्पाणिमनुनार्पयेत् ॥ गणेशायनृपा दीनांजनानांवश्यताकृते ॥ ६८ ॥ सुंदरीवामपादस्यरेणुमादायतत्रतु ॥ संस्थाप्यगणनाथस्यप्रतिमां प्रजपेन्मनुम् ॥ ६९ ॥

तद्भूतंयावत्कृष्णचतुर्दशीपर्य्यन्तम् ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

धृतासुकां कृतप्राणप्रतिष्ठाम् ॥ ७० ॥ ७१ ॥ ७२ ॥ वज्रीस्नुही ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ अरिष्टोनिंबः ॥ ७८ ॥ ७९ ॥

तांध्यात्वारविसाहस्रंसासमायातिदूरतः ॥ श्वेतार्केणाथनिम्बेनकृत्वामूर्तिंधृतासुकाम् ॥ ७० ॥ चतुर्थ्यां पूजयेद्रात्रौरक्तैःकुसुमचंदनैः ॥ जप्त्वासहस्रंतांमूर्तिंक्षिपेद्रात्रौसरित्तटे ॥ ७१ ॥ स्वेष्टंकार्य्यंसमाचष्टेस्वप्ने तस्यगणाधिपः ॥ सहस्रंनिम्बकाष्ठानांहोमादुच्चाटयेदरीन् ॥ ७२ ॥ वज्रिणःसमिधांहोमाद्रिपुर्य्यमपुरंव्रजेत् ॥ वानरस्यास्थिसंजप्तंक्षिप्तमुच्चाटयेद्गृहे ॥ ७३ ॥ जप्तंनरास्थिकन्यायागृहेक्षिप्तंतदाप्तिकृत् ॥ कुलालस्यमृदा स्त्रीणांवामपादस्यरेणुना ॥ ७४ ॥ कृत्वापुत्तलिकांतस्याहृदिस्त्रीनामसंलिखेत् ॥ निखनेन्मंत्रसंजप्तैर्निम्बकाष्ठैः क्षिताविमाम् ॥ ७५ ॥ सोन्मत्ताभवतिक्षिप्रमुद्धृतायांसुखं भवेत् ॥ शत्रोरेवंकृतासातुलशुनेनसमन्विता ॥ ७६ ॥ शरावान्तर्गतासम्यक्पूजिता द्वारिविद्विषः ॥ निखातापक्षमात्रेणशत्रूच्चाटनकृत्स्मृता ॥ ७७ ॥ विषमेसमनुप्राप्तेसिताकारिष्टदारुजम् ॥ गणपं पूजितंसम्यक्कुसुमैरक्तचन्दनैः ॥ ७८ ॥ मद्यभाण्डस्थि तंहस्तमात्रेतंनिखनेत्स्थले ॥ तत्रोपविश्य प्रजपेन्मंत्रीनक्तंदिवामनुम् ॥ ७९ ॥

वाग्बीजंऐं ॥ हृत्नमः ॥ स्वरूपंशेषम् ॥ वह्निप्रियास्वाहा ॥ ८७ ॥ नवममाह ॥ हृल्लेखेति । हृल्लेखात्रितयह्रीं ॥ ३ ॥ अनंतआ ॥ स्वरूपमपरम् ॥ ८८ ॥ दशममाह ॥ मायेति ॥ मायाह्रीं ॥ रमाश्रीं मन्मथःक्लीं ॥ स्वरूपं शेषम् ॥ ८९ ॥ एकादशमाह ॥ हृल्ले-

वाग्बीजंत्रिपुरेसर्ववांछितंदेहिहृत्ततः ॥ वह्निप्रियासप्तदशवर्णोयंकीर्तितोमनुः ॥ ८७ ॥ हृल्लेखात्रितयं प्रौढत्रिपुरेनंतारोग्यमै ॥ श्वर्य्यंदेहिप्रियावह्नेर्मनुरष्टादशाक्षरः ॥८८॥ मायारमामन्मथांतेत्रिपुरामदने पदम् ॥ सर्वशुभंसाधयाग्नेःप्रियान्तोष्टादशाक्षरः ॥ ८९ ॥ हृल्लेखाकमलानंगोबालांतेत्रिपुरेपदम् ॥ मदायत्तांततोविद्याकुरुहृद्वह्निवल्लभा ॥ ९० ॥ मंत्रोविंशतिर्वर्णोयंमायापद्मामनोभवः ॥ परापरेंतेत्रिपुरे सर्वमीप्सितमुच्यताम् ॥ ९१ ॥

खेति हृल्लेखाह्रीं ॥ कमलाश्रीं ॥ अनंगक्लीं हृत्नमः ॥ वह्निवल्लभा स्वाहा शेषं स्वरूपम् ॥ ९० ॥ द्वादशमाह ॥ मायेति माया ह्रीं ॥ पद्माश्रीं ॥ मनोभवःक्लीं ॥ ९१ ॥

अनलकांतास्वाहा ॥ अन्यत्स्वरूपम् ॥ त्रयोदशमाह ॥ कामेति ॥ कामद्वंद्वंक्लीं २ रमायुग्मंश्रीं २ ॥ मायायुक्ह्रीं ॥ त्रिपुराललितेम दीप्सितांयोषितंदेहिवांछितंकुरु इति स्वरूपम् ॥ ज्वलनकामिनीस्वाहा ॥ ९२ ॥ ९३ ॥ चतुर्दशमाह ॥ कामेति ॥ कामपद्माद्रिपुत्री

साधयानकांतायमन्योविंशतिवर्णकः ॥ कामद्वंद्वंरमायुग्मंमायायुक्त्रिपुरापदम् ॥ ९२ ॥ ललितेंते मदीप्सीतितामंतेयोषितंपदम् ॥ देहिवांछितमित्युक्त्वाकुरुज्वलनकामिनी ॥९३॥ अष्टाविंशतिवर्णो यंमनुरिष्टप्रियाप्रदः ॥ कामपद्माद्रिपुत्रीणांप्रत्येकंत्रितयंवदेत् ॥ ९४ ॥ त्रिपुरांतेसुन्दरीतिसर्वजगदि नद्वयम् ॥ वशंकुरुद्वयंमह्यंबलंदेह्यनलांगना ॥९५॥ सर्वाभीष्टप्रदोमन्त्रउक्तोबाणगुणाक्षरः ॥ चतुर्दशानामे तेषांमनूनामृषिरीरितः ॥ ९६ ॥ दक्षिणामूर्तिसंज्ञस्तुच्छंदोगायत्रमुच्यते ॥ त्रिपुरादेवता बालाषडंगं मातृकासमम् ॥ ९७ ॥

णांप्रत्येकत्रयं क्लीं ३ श्रीं३ह्रीं ३ ॥ ९४ ॥ इनद्वयंमह्यंमम ॥ अनलांगनास्वाहा ॥ स्वरूपमपरम् ॥ ९५ ॥ एतेचतुर्दशबालाभेदाः ॥ तेषाम् ॥ ९६ ॥ ऋष्याद्याह ॥ दक्षिणेति ॥ ९७ ॥

---

१ स्क्लरींक्ष्म्यींऐंत्रिपुरेसर्ववांछितंदेहिनमःस्वाहेतिसप्तदशार्णः । २ ह्रीं ह्रीं ह्रीं प्रौढ त्रिपुरे आरोग्यमैश्वर्यंदेहिस्वाहेत्यष्टादशार्णः । ३ ह्रींश्रींक्लीं त्रिपुरामदनेसशुभंसाधयस्वाहेत्यष्टादशाक्षरः । ४ ह्रींश्रींक्लींबालत्रिपुरेमदायत्तां विद्यांकुरुनमः स्वाहेतिविंशत्यर्णः ।

१ ह्रींश्रींक्लींपरापरेत्रिपुरेसर्वमीप्सितंसाधयस्वाहेतिविंशत्यर्णः ।३ क्लींक्लींश्रींह्रींत्रिपुराललितेमदीप्सियोतांयोषितंदेहिवांछितं कुरुस्वाहेत्यष्टाविंश-त्यर्णः ३ क्लींक्लींक्लीं श्रीं श्रींह्रींह्रींह्रींत्रिपुरसुंदरिसर्वजगन्ममवशंकुरुकुरुमह्यंबलंदेहिस्वाहेतिपंचत्रिंशदर्णः । ४ अस्यबालामंत्रस्य दक्षिणामूर्तिऋषि गायत्री छंदःत्रि राबालादेवताममाभीप्टसिद्ध्यर्थेजपेविनियोगः ।

ध्यानमाह ॥ पाशेति ॥ अंकुशाक्षसूत्रेदक्षयोः ॥ ९८ ॥ हयारिःकरवीरः ॥ सायकैःपंचबाणदेवताभिः ॥ ९९ ॥ दिगधीशास्त्रैरिति दिशामीशैस्तदस्त्रैश्चेत्यर्थः ॥ १०० ॥ बालामुक्त्वालघुश्यामामाह ॥ वाग्बीजमिति वार्ग्बाजंऐं ॥ हृदयंनमः ॥ कर्णउ ॥ सनेत्रकएकने

पाशांकुशौपुस्तकमक्षसूत्रंकरैर्दधानासकलामरार्च्या ॥ रक्तात्रिनेत्राशशिशेखरेयंध्येयाखिलर्द्ध्यैत्रिपुरात्रबाला ॥ ९८ ॥ जपेल्लक्षंदशांशेनहोमः पुष्पैर्हयारिजैः ॥ पूजापूर्वोदितेपीठेंगैरत्याद्यैश्चसायकैः ॥ ॥ ९९ ॥ मातृभिर्दिगधीशास्त्रैः प्रयोगाः पूर्ववन्मताः ॥ लघुश्यामामथोवक्ष्येस्मरणादिष्टदायिनीम् ॥ ॥ १०० ॥ वार्ग्बाजंहृदयंकर्णएकनेत्रः सनेत्रकः ॥ वृषोमुकुंदमाढोकूर्मोदीर्घेंदुसंयुतः ॥ १०१ ॥ नदीदीर्घोलिमातंगिसर्वातेस्याद्वशंकरि ॥ वैश्वानरप्रियांतोऽयंमंत्रोविंशतिवर्णवान् ॥ २ ॥ मदनोऽस्य[2] मुनिःप्रोक्तोगायत्रीनिचृदादिका ॥ छंदोदेवीलघुश्यामाबीजंवाग्वह्निवल्लभा ॥ शक्तिरुक्ताखिलाभीष्टसाधनेविनियोजनम् ॥ १०३ ॥

त्रःइयुतश्च्छिःच्छि ॥ मुकुन्दमारूढोवृषः टस्थितः षः ष्ट ॥ दीर्घेंदुसंयुनः कूर्मः चः चां ॥ १ ॥ दीर्घोनंदी डाः लिमातंगिसर्ववशंकरि स्वरूपम् ॥ वैश्वानरप्रियास्वाहा ॥ २ ॥ ऐंबीजंस्वाहाशक्तिः ॥ १०३ ॥

न्यासानाह ॥ वागिति ॥ ऐंरत्यैनमः मूर्ध्नि ॥ ह्रींप्रीत्यैनमोहृदि ॥१०४॥ क्लींमनोभवायैनमः पादयोः ॥ इच्छेति ॥ ऐंइच्छाशक्त्यै नमोमुखे ॥ ह्रींज्ञानशक्त्यैनमः कंठे ॥ क्लींक्रियाशक्त्यैनमोलिंगे ॥ ५ ॥ बाणेशीबीजानि–द्रांद्रीं क्लींब्लूंसः इति ॥ तत्पूर्वकान् ॥ द्रावणाद्यान्बाणान् कास्यहृद्गुह्यपादेन्यसेत् ॥ द्रांद्रावणबाणायनमइत्यादि ॥ कंशिरः ॥ आस्यंमुखं ॥ ६ ॥ ७ ॥ षडंगमाह । रामेति ॥ मातृकान्यासमाह ॥ ङेइति ॥ दीर्घस्वराआद्यास्येदृशंविलोमतोदीर्घक्षादीनामष्टकमाद्यंसांतामातरोमूर्द्धादिषुन्यस्याः ॥ तथा

वाक्पूर्विकांतिंमूर्द्धिप्रीतिंमायादिकांहृदि ॥ १०४ ॥ पादयोर्विन्यसेन्मंत्रीकामपूर्वांमनोभवाम् ॥ इच्छाशक्तिंज्ञानशक्तिंक्रियाशक्तिंक्रमान्न्यसेत् ॥ ५ ॥ वाङ्मायाकामबीजाद्यांमुखेकंठेशिवेतथा ॥ द्रावणंशोषणंबाणंतापनंमोहनाभिधम् ॥ ६ ॥ उन्मादनंक्रमात्पंचबाणेशीबीजपूर्वकान् ॥ कास्यहृद्गुह्यपादेषुन्यस्यकुर्य्यात्षडङ्गकम् ॥ ७ ॥ रां[3]मां[3]ग्निगुणैरां[3]मां[6]गनेत्र[2]वर्णैर्मनूत्थितैः ॥ ङेनमोंताःकन्यकांताब्राह्मयाद्याअष्टमातरः ॥ ८ ॥ दीर्घस्वराद्यदीर्घक्षाद्यष्टकाद्याविलोमतः ॥ विन्यस्यमूर्द्धिनवामांसेवामपार्श्वेषुनाभितः ॥ ९ ॥ दक्षपार्श्वेदक्षिणांसेककुद्धृदययोरपि ॥ तारवागादिकाअष्टौसिद्धयःकन्यकांतिमाः ॥ ११० ॥



कीदृश्योमातरः ॥ नमोंताः कन्यकांताः चतुर्थीनमोंतंकन्यकापदमंतेयासांताः ॥ यथा–आंक्षांब्राह्मीकन्यकायैनमोमूर्ध्नि ॥ इलांमाहेश्वरीकन्यकायनमोवामांसे ॥ ऊहांकौमारीक०वामपार्श्वे ॥ ऋंसांवैष्णवीक०नाभौ ॥ लंषांवाराहीक०दक्षपार्श्वे एंशांइंद्राणीक० दक्षांसे ॥

१ ऐंनमउच्छिष्टचांडालिमातंगिसर्ववशंकरिस्वाहेतिविंशत्यर्णः । २ अस्यलघुश्यामामंत्रस्यमदनऋषिः निचद्गायत्रीछंदः देवीलघुश्यामादेवताऐंबीजं स्वाहाशक्तिःममाखिलभीष्टसिद्ध्यर्थेजपेविनियोगः ।

औंवांचामुंडाकन्यकायै० ककुदि ॥ अःलांमहालक्ष्मीकन्यकायै० हृदि ॥ सिद्धिन्यासमाह । तारेति ॐ एंअणिमासिद्धिकन्यकायैनमो मूर्ध्नीत्यादि ॥ सिद्धयइति ॥ अनुपदंवक्ष्यमाणाः ॥ १०८ ॥ ९ ॥ १० ॥ अलिकललाटम् चिल्लिभ्रूः ॥ ११ ॥ अष्टसिद्धीराह ॥ अणिमेत्यादि ॥१२॥ अप्सरोन्यासमाह ॥ कामाद्याइति ॥ क्लींउर्वशीकन्यकायैनमोमूर्ध्निइत्यादि ॥ नत्रयोर्द्वे ॥ कर्णयोर्द्वे ॥ अप्सरसआह

चतुर्थीनमसायुक्तान्यस्याःकालिकचिल्लिषु ॥ कंठेचहृदयेनाभावाधारेलिंगमूर्द्धनि ॥ १११ ॥ अणिमामहिमाचापिलघिमागरिमेशिता ॥ वशिताचाथप्राकाम्यंप्राप्तिरित्यष्टसिद्धयः ॥ १२ ॥ कामाद्याः कन्यकाःप्रीताअष्टावप्सरसोन्यसेत् ॥ केभालेनेत्रयोर्वक्त्रेवर्णयोःकाकुदेपिच ॥ १३ ॥ उर्वशीमेनकारंभाघृताचीपुंजकस्थला ॥ सुकेशीमंजुघोषाचमहारंगवतीरिताः ॥ १४ ॥ यक्षगंधर्वसिद्धानांकन्यकानरनागयोः ॥ विद्याधरःकिंपुरुषःपिशाचानामपीहताः ॥ १५ ॥ अंसयोर्हृदयेन्यस्येत्स्तनयोर्जठरेक्रमात् ॥ गुह्येप्याधारदेशेचनमोंतामदनादिकाः ॥ ११६ ॥

॥ उर्वशीति कन्यान्यासमाह ॥ यक्षेति ॥ नमोंतामदनादिकाः ॥ कामवीजाद्यायक्षादीनांकन्यका अंसादिषुन्यसेत् ॥ अंसयोर्द्वेस्तनयोर्द्वेएकैकान्यत्र ॥ क्लींयक्षकन्यकायैनमोदक्षांसे-क्लींगंधर्वकन्यकायैनमोवामांसे-इत्यादिप्रयोगः ॥ १३ ॥ १४ ॥ १५ ॥ ११६ ॥ वर्णन्यासमाह ॥ तारेति ॥ प्रणवाद्यान् ॥ नमोंतान्सबिंदुकान् ॥ करपादसंधिषुसाग्रेषुन्यसेत् ॥ ॐक्लींनमोदक्षसे ॥ ॐनमोंदक्षकूर्परे इत्यादि ॥ ११७ ॥ सुरार्णवस्यांतरीपंद्वीपंतत्रयद्रत्नमंदिरंतन्मध्यगे सिंहासनेस्थितांध्यायेत् ॥११८ माणिक्येति ॥ कीरच्छदश्यामलांशुकपिच्छनीलाम्

ताराद्यान्नमसायुक्तान्मूलवर्णान्सबिंदुकान् ॥ न्यसेत्संधिषुसाग्रेषुकरयोःपादयोरपि ॥ ११७ ॥ न्यासानेवंविधान्कृत्वामातंगीमासनेस्मरेत् ॥ सुरार्णवांतरीपस्थरत्नमंदिरमध्यगे ॥ १८ ॥ माणिक्याभरणान्वितांस्मितमुखींनीलोत्पलाभांवरांरम्यालक्तककलितपादकमलांनेत्रत्रयोल्लासिनीम् ॥ वीणावादनतत्परांसुरनतांकीरच्छदश्यामलांमातंगींशशिशेखरामनुभजेत्तांबूलपूर्णाननाम् ॥ १९ ॥ लक्षंजपेन्मधूकोत्थैर्जुहुयादयुतंशुभैः ॥ मातंगीप्रोदितेपीठेलघुश्यामांप्रपूजयेत् ॥ १२० ॥ त्रिकोणपंचकोणाष्टदलषोडशपत्रके ॥ वेदद्वारधरागेहावृत्तेयंत्रेविधानतः ॥ २१ ॥ देव्याअग्रेपार्श्वयोश्चरतिसौर्चेद्रतिपूर्विकाः ॥ इच्छाज्ञानक्रियाशक्तीःकोणेष्वग्न्यादिषुत्रिषु ॥२२॥ बाणान्पंचसुकोणेषुकेसरेष्वंगदेवताः ॥ ब्राह्म्याद्याअष्टपत्रेषुपत्राग्रेष्वणिमादिकाः ॥ १२३ ॥

मलांशुकपिच्छनीलाम् ॥ ११९ ॥ १२० ॥ १२१ ॥ रतिपूर्विकारतिप्रीतिमनोभवाः ॥ १२२ ॥ १२३ ॥

ऊर्वश्याद्या अष्टौ ॥ कन्याअष्टौयक्षादीनाम् ॥ न्यासवत्प्रयोगान् ॥ न्यासेयथाप्रयोगास्तथापूजायामपि ॥ १२४ ॥ योगिनीराह ॥

यजेत्षोडशपत्रेषूर्वश्याद्याःकन्यकाअपि ॥ प्रयोगान्न्यासवत्कुर्य्याद्रत्यादीनांप्रपूजने ॥ १२४ ॥ भूगृहस्यचतुर्दिक्षुयोगिनीःपरिपूजयेत् ॥ गजाननासिंहमुखीगृध्रास्याकाकतुंडिका ॥ २५ ॥ उष्ट्रग्रीवाहयग्रीवावाराहीशरभानना ॥ उलूकिकाशिवारावामयूरीविकटानना ॥ २६ ॥ अष्टवक्त्राकोटराक्षीकुब्जाविकटलोचना ॥ समर्चयेद्दिशिप्राच्यामेताःषोडशयोगिनीः ॥ २७ ॥ शुष्कोदरीललज्जिह्वाश्वदंष्ट्रावानरानना ॥ ऋक्षाक्षीकेकराक्षीचबृहत्तुंडासुराप्रिया ॥ २८ ॥ कपालहस्तारक्ताक्षीशुकीश्येनीकपोतिका ॥ पाशहस्तादंडहस्ताप्रचंडेत्यपिषोडश ॥ २९ ॥ पूज्याकीनाशदिग्भागेप्रतीच्यांचंडविक्रमा ॥ शिशुघ्नीपापहंत्रीचकालीरुधिरपायिनी ॥ १३० ॥ वसाधयागर्भभक्षाशवहस्तांत्रमालिनी ॥ स्थूलकेशीबृहत्कुक्षिःसर्पास्याप्रेतवाहना ॥ ३१ ॥ दंदशूककराक्रौंचीमृगशीर्षेतिषोडश ॥ संपूज्याउत्तरस्यांतुषोडशैववृषानना ॥ १३२ ॥

गजाननेत्यादि ॥ १२५ ॥ प्रतिदिशषोडशयथार्थनाम्न्यःसर्वाः ॥ १२६ ॥ १२७ ॥ १२८ ॥ १२९ ॥ कीनाशदिग्भागेदक्षिणस्याम् ॥ १३० ॥ ॥ १३१ ॥ १३२ ॥

॥ १३३ ॥ १३४ ॥ १३५ ॥ स्वस्वमंत्रेणेति ॥ बटुकादीनांमंत्राउक्ताः ॥ १३६ ॥ १३७ ॥ १३८ ॥ तद्गायत्रीमाह ॥ वाणीति ॥

व्यात्तास्याधूमनिःश्वासा व्योमैकचरणोर्द्धदृक् ॥ तापनीशोषणीदृष्टिः कोटरीस्थूलनासिका ॥१३३॥ विद्युत्प्रभाबलाकास्यामार्जारीकटपूतना ॥ अट्टाट्टहासाकामाक्षेत्यर्चनीयाअभीष्टदाः ॥३४॥ नश्यंतिभूतशाकिन्यआसांनामश्रुतेरपि ॥ भूमंदिरस्यकोणेषुवह्न्यादिषुयुजेत्क्रमात् ॥ ३५ ॥ स्वस्वमंत्रेणबटुकंगणेशंक्षेत्रपालकम्॥दुर्गातद्बहिरिंद्रादीन्वज्रादीनपिपूजयेत्॥ ३६॥भूगृहस्यचतुर्दिक्षुचतुर्वाद्यानिपूजयेत्॥ ॥ तत्तत्संज्ञंचविततंघनंचसुषिराभिधम् ॥ ३७ ॥ द्वादशावरणैरेवलघुश्यामांयजेत्तुयः ॥ सर्वासांसपदांपात्रमचिराज्जायतेसना ॥३८॥ वाणीशुकप्रियाडेन्ताविद्महेमीनकेतनः ॥ कामेश्वरीं धीमहीतितन्नःश्यामाप्रचोदयात् ॥ ३९ ॥ एषोदितातुमातंगीगायत्रीसर्वसिद्धिदा ॥ अनया यागवस्तूनिप्रोक्षेत्तस्यास्समर्चने ॥ १४० ॥ मातंगीमंत्रसंप्रोक्ताः प्रयोगा अत्र कीर्तिताः ॥ राजानोराजपुत्राश्च सुदृशोमदमंथराः ॥ १४१ ॥

॥ वाणीऐं ॥ शुकप्रियाङेंता शकप्रियायै ॥ मीनकेतनःक्लीं ॥ स्वरूपम् ॥ १३९ ॥ १४० ॥ १४१ ॥

। १ ऐंशुकप्रियायैविद्महेक्लींकामेश्वरींधीमहि । तन्नश्यामाप्रचोदयात् ।

॥ १४२ ॥ १४३ ॥ १४४ ॥ इति श्रीमन्त्रमहोदधिनौकायांबालाश्यामानिरूपणमष्टस्तरंग ॥८॥ अन्नपूर्णेश्वरीमंत्रंवक्तुप्रतिजानीते ॥ फलंकथयन् मंत्रमुद्धरति ॥ वेदादिरिति ॥ वेदादिःप्रणवः ॥ गिरिजाह्रीं ॥ पद्माश्रीं ॥ मन्मथःक्लीं ॥ हृदयंनमः ॥ भगवतिमाहेश्व

दासामनोवचःकायैर्भवंत्यस्याउपासितुः ॥ शाकिनीप्रेतभूताश्चधर्षितुंतनशक्नुयुः ॥१४२॥ भूरिणाकिमिहोक्तनदेवीयमखिलेष्टदा ॥ यन्मनुस्मरणादेवनरोदेवोपमोभवेत् ॥४३॥ देव्याउपासकैःपुंभिःस्त्रियोनिंद्यानजातुचित् ॥ देवीवन्माननीयास्तामनाभीष्टमभीप्सुभिः ॥ १४४ ॥ इतिश्रीमहीधरविरचितेमंत्रमहोदधौबालालघुश्यामानिरूपणमष्टमस्तरंगः ॥८॥ अन्नपूर्णेश्वरीमंत्रंवक्ष्येभीष्टप्रदायकम् ॥ कुबेरोयामुपास्याशुलब्धवान्निधिनाथताम् ॥१॥ शंभोः सख्यंदिगीशत्वंकैलासाधीशतामपि ॥ वेदादिर्गिरिजापद्मामन्मथोहृदयंभग ॥२॥ वतिमाहेश्वरिप्रांतेन्नपूर्णेदहनांगना ॥ प्रोक्ताविंशतिवर्णेयंविद्यास्याद्द्रुहिणोमुनिः ॥ ३ ॥

रिअन्नपूर्णेस्वरूपम् ॥ दहनांगनास्वाहा ॥ द्रुहिणोब्रह्मा ॥ १ ॥ २ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ भू मीयादितद्वर्णसंख्या ॥ ६ ॥ ध्यानमाह ॥ दर्वींदक्षे स्वर्णपात्रंवामे ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ शिवमंत्रमाह ॥

कृतिश्छंदोन्नपूर्णेशीदेवतापरिकीर्तिता ॥ षड्दीर्घाढ्येनहृल्लेखाबीजेनस्यात्षडंगकम् ॥ ४ ॥ मुखनासाक्षिकर्णाधुगुदेषुनवसुन्यसेत् ॥ पदानिनवतद्वर्णसंख्येदानीमुदीर्यते ॥ ५ ॥ भूमिचंद्रधरैकाक्षिवेदाब्धिर्युगबाहुभिः ॥ पदसंख्यामितैर्वर्णैस्ततोध्यायेत्सुरेश्वरीम् ॥ ६ ॥ तप्तस्वर्णनिभाशशांकमुकुटारत्नप्रभाभासुरानानावस्त्रविराजितात्रिनयनाभूमीरमाभ्यांयुता ॥ दर्वींहाटकभाजनंचदधतीरम्योच्चपीनस्तनीनृत्यंतंशिवमाकलय्यमुदिताध्येयान्नपूर्णेश्वरी ॥ ७ ॥ लक्षंजपोयुतंहोमश्चरुणाघृतसंयुतः ॥ जयादिनवशक्त्याढ्येपीठेपूजासमीरिता ॥ ८ ॥ त्रिकोणवेदपत्राष्टपत्रषोडशपत्रके ॥ भूपुरेणयुतंयंत्रंप्रदद्यान्मायययासनम् ॥ ९ ॥ अग्न्यादिकोणत्रितयेशिववाराहमाधवान् ॥ अर्चयेत्स्वस्वमंत्रैस्तुप्रोच्यंतेमनवस्तुते ॥ १० ॥ प्रणवोमनुचंद्राढ्यगगनंहृदयंशिवा ॥ मारुतःशिवमन्त्रोयंसप्तार्णःशिवपूजने ॥ ११ ॥

प्रणव इति ॥ गगनंहकारः ॥ मनुचन्द्राढ्यम्औबिंदुयुतंहौंहृदयंनमः ॥ शिवास्वरूपम् ॥ मारुतोयः ॥ ११ ॥

---

१ ओं ह्रींश्रींक्लींनमः भगवतिमाहेश्वरिअन्नपूर्णेस्वाहा २० । अन्नपूर्णामंत्रस्यद्रुहिणऋषिःकृतिश्छंदः अन्नपूर्णेशीदेवतामममाखिलसिद्ध्यर्थेजपेविनियोगः ।

१ ओंहौंनमः शिवायेतिसप्तार्णः ।

वराहमंत्रमाह ॥ तारइति ॥ तारॐ नमोभगवतेवराहस्वरूपम् ॥ अर्घीशयुग्वसुः ॥ ऊयुतोरः ॥ रूपायभूर्भुवः स्वःस्वरूपम् ॥ शूरःपः कामिका ॥ तयेभूपतित्वंमेदेहिददापयस्वरूपम् ॥ शुचिप्रियास्वाहा ॥ १२ ॥ १३ ॥नारायणमंत्रमाह ॥ प्रणवइति ॥ हृदयं नमः ॥ नारायणायस्वरूपम् ॥ वसुवर्णोऽष्टार्णः ॥ १४ ॥ धराश्रियोर्मंत्रमाह ॥ अन्नमिति ॥ अन्नंमह्यन्नंमेदेह्यन्नाधिपतयेममान्नंप्रदाय

तारंनमोभगवतेवराहार्घीशयुग्वसुः ॥ पायभूर्भुवरन्तेस्वोथशूरःकामिकाचये ॥ १२ ॥ भपतित्वंचमेदे हिददापयशुचिप्रिया ॥ त्रयस्त्रिंशद्वर्णमन्त्रःप्रोक्तोवाराहपूजने ॥ १३ ॥ प्रणवोहृदयंनारायणायवसुव र्णकः नारायणार्चनेमंत्रःषडंगानिततोर्चयेत् ॥ १४ ॥ धरांवामेस्वमनुनादक्षभागेश्रियंतथा ॥ अन्नं मह्यन्नमित्युक्त्वामेदेह्यन्नाधिपार्णका ॥ १५ ॥ तयेममान्नंप्राणांतेदापयानलसुंदरो ॥ द्वाविंशत्यक्षरो मन्त्रोभूमीष्टौभूमिसंपुटः ॥ १६ ॥

यस्वरूपम् ॥ अनलसुन्दरीस्वाहा ॥ अयंमन्त्रोभूर्माष्टौभूमिपूजनेभूमिबीजेनसंपुटः ॥ १५ ॥ १६ ॥ श्रीपूजायांश्रीबीजेनसंपुटितः भूबीजमाह ॥ स्मृतिरिति ॥ स्मृतिगः ॥ लमनुचन्द्रयुक् ॥ लऔ ॥ बिंदुयुतः ॥ ग्लौं ॥ एतद्भुवोबी जम् ॥श्रीबीजमाह ॥ वह्नीति ॥ रेफई ॥ बिंदुयुतोबकः शः श्रोइतिश्रियोबीजम् ॥१७॥ वेदास्रेचतुरस्रेमन्त्राद्यचतुर्बीजाद्याश्चतस्रः शक्तिःपूजयेत् ॥ ताएवाह ॥ परेति॥ओं परायेनमः॥ ह्रीं भुवनेश्वर्यै ॥१८॥ श्रींकमलायै॥क्लीं सुभगायै॥ मन्त्रस्यशेषायेवर्णाः

लक्ष्मीपुटस्तत्पूजायांस्मृतिर्लमनुचंद्रयुक् ॥ भुवोबीजंवह्निशांतिबिंदुयुक्तोबकः श्रियः ॥ १७ ॥ मंत्रादि स्थचतुर्बीजपूर्विकः परिपूजयेत् ॥ शक्तीश्चतस्रोवेदास्रेपराचभुवनेश्वरी ॥ १८ ॥ कमलासुभगाचेति ब्राह्मयाद्याअष्टपत्रगाः ॥ षोडशारेऽमृताचैवमानदातुष्टिपुष्टयः ॥ १९ ॥ प्रीतीरतिर्ह्रीः श्रीश्चापिस्वधास्वा हादशम्यथ ॥ ज्योत्स्नाहैमवतीछायापूर्णिमाः सहनित्यया ॥ २० ॥ अमावास्येतिसंपूज्यामंत्रशेषार्ण पूर्विकाः भूपुरेलोकपालाः स्युस्तदस्त्राणितदग्रतः ॥ २१ ॥

चतुर्बीजव्यतिरिक्ताः ॥ तत्पूर्विकाअमृताद्याः षोडशदलेपूज्याः अंअमृतायैनमः ॥ मांमानदायैइत्यादि ॥ १९ ॥ २० ॥ २१ ॥

१ ओं नमोभगवतेवराहरूपायभूर्भुवःस्वःपतयेभूपतित्वमेदेहिददापयस्वाहेतित्रयस्त्रिंशद्वर्णः । २ ओं नमोनारायणायेत्यष्टार्णः । ३ ग्लौअन्नंमह्यन्नं मेदेह्यन्नाधिपतयेममान्नंप्रदापयस्वाहा ग्लौमितिद्वाविंशत्यर्णः ।

मन्त्रांतरमाह ॥ अयमिति ॥ अयंविंशत्यर्णः ॥ श्रीकामहीनः ॥ षडंगमाह ॥ द्वीति ॥२२॥२३॥ मन्त्रातरमाह ॥ पूर्वोक्तेति ॥ विंशत्यर्णेमन्वर्णाच्चतुर्दशाक्षरात् ॥ माहेश्वरीत्यंते ॥ ममाभिमतमन्नंदेहिदेह्रीतिवर्णानुच्चारयेत् ॥ अन्नपूर्णेस्वाहेत्यंतेऽस्त्येव ॥ ततएकगुणार्ण

इत्थंजपादिभिः सिद्धमन्त्रेस्मिन्धनसंचयैः ॥ कुबेरसदृशोमंत्रीजायतेजनवंदितः ॥ २२ ॥ अयंरमाकामबीजरहितोष्टादशाक्षरः ॥ द्विनेत्रवेदाब्धिनेत्राणैरंगमीरितम् ॥ २३ ॥ पूर्वोक्तमंत्रमन्वर्णान्ममाभिमतमुच्चरेत् अन्नंदेहियुगंचापिभवेदेकगुणार्णवान् ॥ २४ ॥ युगांगवेदसप्ताब्धिषडर्णैरंगकल्पनम् ॥ प्रणवः कमलाशक्तिर्नमोभगवतीतिच ॥ २५ ॥ प्रसन्नपारिजातेश्वयन्नपूर्णेनलांगना ॥ चतुर्विंशतिवर्णात्मामंत्रः सर्वेष्टसाधकः ॥ २६ ॥ रामाक्षिवेदनिधिभिर्वेदद्व्यर्णैः षडंगकम् ॥ तारश्रीशक्ति हृदयंभगांभः कामिकासदृक् ॥ २७ ॥

वानेकत्रिंशदर्णः ॥ २४ ॥ षडंगमाह ॥ युगेति ॥ मंत्रांतरमाह ॥ प्रणवइति ॥ कमलश्रीं ॥ शक्तिःह्रीं ॥ अनलांगनास्वाहा ॥२५॥२६॥ षडंगमाह ॥ रामेति ॥ निधयोनक मंत्रांतरमाह ॥ तारेति ॥ तारओं ॥ श्रीःश्रीं ॥ शक्तिःह्रीं ॥ हृदयंनमः ॥ भगस्वरूपम् ॥ अम्भोवः ॥ सदृक्कामिकाति ॥ २७ ॥

अग्निपत्नीस्वाहा ॥ स्वरूपमन्यत् ॥ २८ ॥ षडंगमाह ॥ रामेति ॥ अन्यत्तुध्यानपूजाप्रयोगःपूर्ववत् ॥ २९ ॥ गौरीमंत्रमाह ॥

माहेश्वरीप्रसन्नेतिवरदेपदमुच्चरेत् ॥ अन्नपूर्णेग्निपत्नीतिपंचविंशतिवर्णवान् ॥२८॥ रामषड्युगषड्वेदनेत्रार्णैःस्यात्षडंगकम् ॥ एषांचतुर्णांमंत्राणामन्यत्सर्वंतुपूर्ववत् ॥२९॥ त्रैलोक्यमोहनोगौरीमंत्रःसंकीर्त्यतेधुना ॥ मायानमोंतेब्रह्मश्रीराजितेराजपूजिते ॥३०॥ जयेतिविजयेगौरीगांधारीतिवदेत्पदम् ॥ त्रिभुतोयंमेषवशंकरिसर्वससघलः ॥ ३१ ॥ कवशंकरिसर्वस्त्रीपुरुषांतेवशंकरि ॥ सुद्वयंदुद्वयंद्वे युग्वायुग्मं हरवल्लभा ॥ ३२ ॥ स्वाहांतएकषष्ट्यर्णोमंत्रराजः समीरितः ॥ अजोमुनिर्निचृच्छंदो गौरीत्रैलोक्यमोहिनी ॥ ३३ ॥

मायेति ॥ मायाह्रीं ॥ ३० ॥ तोयंवः ॥ मेषोनः ॥ ससघलः ॥ लो ॥ ३१ ॥ सुदुघेवाएषांयुग्मंसु २ दु २ घे २ वा २ हरवल्लभाह्रीं स्वरूपंशेषम् ॥ ३२ ॥ अजोब्रह्मा ॥ ३३ ॥

---

१ ओं ह्रींनमःभगवतिमाहेश्वरिअन्नपूर्णेस्वाहेत्यष्टादशार्णः । २ ओं ह्रींश्रींक्लींनमःभगवतिमाहेश्वरिममाभिमतमन्नंदेहिअन्नपूर्णेस्वाहेत्येक त्रिंशदर्णः । ३ ओं श्रींह्रींनमोभगवतिप्रसन्न पारीजातेश्वरिअन्नपूर्णेस्वाहेतिचतुर्विंशत्यर्णी।

१ ॐश्रींह्रींनिभःभगवतिमाहेश्वरिप्रसन्नवरदेअन्नपूर्णेस्वाहेतिपंचविंशत्यर्णः । २ ह्रींनमोब्रह्म श्रीराजितेराजपूजितेजयविजयेगौरिगांधारि त्रिभुवनशंकरि सर्वलोकवशंकरिसर्वस्त्रीपुरुषवशंकरिसुसुदुदुघेघेवावाह्रींस्वाहेत्येकषष्ट्यर्णः । ॐ अस्यमंत्रस्यअजऋषिः निचृद्गायत्रीछन्दः गौरित्रैलोक्यमोहिनी देवताह्रीं बीजं स्वाहाशक्तिः ममाखिलाकामसिद्ध्यर्थेजपेविनियोगः ।

षडंगमाह ॥ चतुर्दशेति॥दीर्घषट्कयुक्तैश्चतुर्दशाद्यक्षरैःषडंगम् ॥ ३४ ॥ ३५ ॥ ध्यानमाह ॥ गीर्वाणेति ॥ गीवाणादेवास्तत्समूहैःपूजि तंपाहपद्मंयस्याः ॥ अंकुशंदक्षे ॥३६॥ गौर्यामंत्रांतरमाह ॥ नभइति ॥ नभोहकारः ॥ कीदृकूनभःहसानलयुतम्॥हसःस॥अनलोरः ॥

देवताबीजशक्तीतुमायास्वाहापदेक्रमात्॥ चतुर्दशदशाष्टाष्टदशैकादशवर्णकैः॥ ३४॥ दीर्घाढ्यमाययायुक्तैः षडंगानिसमाचरेत् ॥ पूलेनध्यापकंकृत्वाध्यायेत्त्रैलोक्यमोहिनीम् ॥ ३५ ॥ गीर्वाणसंघार्चितपादपंकजारुणप्रभाबालशशांकशेखरा ॥ रक्तांबरालेपनपुष्पयुग्मुदेसृणिंसपाशंदधती शिवास्तुनः ॥ ३६ ॥ अयुतंप्रजपेन्मंत्रंसहस्रंघृतसंयुतैः ॥ पायसैर्जुहुयात्पीठे प्रागुक्त गिरिजां यजेत् ॥ ३७ ॥ केसरेष्वंगमाराध्यब्राह्म्यद्याः पत्रमध्यगाः ॥ लोकेश्वरास्तदस्त्राणितद्बहिः परिपूजयेत् ॥ ॥ ३८ ॥ इत्थमाराधितादेवीप्रयच्छेत्सुखसंपदः ॥ तंदुलैस्तिलसंमिश्रैर्लवणैर्मधुरान्वितैः ॥ ३९ ॥

ताभ्यांयुतम् ॥ ऐस्थबिंदुयुतम् ॥ तेनहूसैं ॥ तोयंवः ॥ कीदृक्वायुर्यः ॥ अग्नीरः ॥ कर्णऊः ॥ इंदुर्बिंदुः ॥ तर्युतम् ॥ व्य्रूं॥स्वरूपमन्यत् ॥ मायाह्रीं ॥ रमाश्रीं ॥ आत्मभूःक्लीं ॥ अन्यत्स्वरूपम ॥ ३७ ॥ ३८ ॥ ३९ ॥
॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ वह्निप्रियास्वाहा ॥ ४४ ॥ ४५ ॥ ४६ ॥ अंगमंत्राःषट् ॥ दीर्घयुक्मायाबीजपरंयेषामीदृशाः ॥ ४७॥

फलैरम्यैरक्तपद्मैर्जुहुयाद्योदिनत्रयम् ॥ तस्यविप्रादयोवर्णावश्याःस्युर्मासमध्यतः ॥ ४० ॥ रविमंडलमध्यस्थांदेवींध्यायञ्जपेन्मनुम् ॥ अष्टोत्तरशतंतावद्धुत्वाग्नौवशयेज्जगत् ॥ ४१ ॥ नभोहंसानलयुतमैकारस्थंशशांकयुक् ॥ तोयवाय्वग्निकर्णेन्दुयुतंराजमुखीतिच ॥ ४२ ॥ राजाधिमुखिवश्यांतेमुखिमायारमात्मभूः ॥ देविदेविमहादेविदेवाधिदेविसर्वच ॥ ४३ ॥ जनस्यचमुखंपश्चान्ममवशंकुरुद्वयम् ॥ वह्निप्रियांतोमंत्रीष्टचत्वारिंशल्लिपिर्मतः ॥ ४४ ॥ ऋषिच्छंदोदेवतास्तुपूर्ववत्परिकीर्तिताः ॥ हृदेकादशभिःप्रोक्तंशिरस्यात्सप्तवर्णकैः ॥ ४५ ॥ शिखावर्मापिवेदार्णैःपंचभिर्नेत्रमीरितम् ॥ अस्त्रंसप्तदशार्णैः स्याद्ध्यानजप्यादिपूर्ववत् ॥ ४६ ॥ अङ्गमंत्रास्तुदीर्घाढ्यभुवनेशीपरामताः ॥ एवंसिद्धमनुर्मंत्रीप्रयोगान्कर्तुमर्हति ॥ ४७ ॥ कुर्यात्सर्वजनस्थानेमनोःसाध्याभिधानकम् ॥ जपेहोमेतर्पणेचवशीकरणकर्मणि ॥४८॥ ससंपातंघृतंहुत्वासहस्रंसप्तवासरम् ॥ संपाताज्यंतुसाध्यस्यप्राशितंवश्यकारकम्॥४९॥

मनोर्पत्रस्यसर्वजनस्थानेसवजनस्येतिपदस्थानेसाध्याभिधानकंसाध्यनामोच्चरेत ॥ देवदत्तस्यमुखमित्यादि ॥ ४८ ॥ ४९ ॥

१ हसैंव्य्रूंराजमुखिराजाधिमुखिह्रीं श्रींदेविदेविमहादेविदेवाधिदेविसर्वजनस्यमुखंममवश्यंकुरुस्वाहेत्यष्टचत्वारिंशदर्णः ।

प्रयोगान्तरमाह ॥ साध्यनक्षत्रेति ॥ साध्यस्ययन्नक्षत्रम् ॥ जन्मनक्षत्रतत्सम्बन्धीयोवृक्षस्तेनसाध्याकृतिंसाध्यप्रतिमांकुर्य्यात् । । तत्रप्राणान्प्रतिष्ठाप्य ॥ तामंगणेखात्वातदुपर्यग्निनिधायरक्तचन्दनार्कैर्जपापुष्पैः सहस्रंहुत्वातानिष्कास्यनदीतटेनिखनेत् ॥ सदासःस्यात् ॥ नक्षत्रवृक्षायथा–कारस्करोथधात्रीस्यादुदुंबरतरुःपुनः जंबूःखादिरकृष्णाख्यौवंशपिप्पलसंज्ञकौ ॥ नागरोहिणनामानौपलाशप्लसंज्ञकौ ॥

साध्यनक्षत्रवृक्षेणकुर्य्यात्साध्याकृतिंशुभाम् ॥ तस्यामसून्प्रतिष्ठाप्यप्रांगणेनिखनेच्चताम् ॥ ५० ॥ तत्रानलंसमाधायरक्तचंदनसंयुतैः ॥ जपापुष्पैर्निशीथिन्यांजुहुयात्सप्तवासरम् ॥ ५१ ॥ सहस्रंप्रत्यहं पश्चात्तांनिष्कास्यसरित्तटे ॥ निखनेत्साधकस्तस्यसाध्योदासोभवेद्ध्रुवम् ॥ ५२ ॥ ज्येष्ठलक्ष्मीमहामंत्रःप्रोच्यतेधनवृद्धिदः ॥ वाग्बीजंभुवनेशानीश्रीरनंतोघलक्ष्मिच ॥ ५३ ॥

अम्वष्ठविल्वार्जुनाख्ययविकंकतमहीरुहाः ॥ वकुलःसरलःसर्जोवंजुलःपनसार्ककौ ॥ शमीकदंवनिंबाम्रामधूकावृक्षशाखिनः ॥ इतिशारदोक्ताः ॥ ५० ॥ ५१ ॥ ५२ ॥ ज्येष्ठालक्ष्मीमंत्रमाह ॥ वागिति ॥ वाग्बीजंए भुवनेशानीह्रीं ॥ श्रीःश्रीं ॥ अनंतआ ॥ घलक्ष्मिस्वरूपम् ॥ ५३ ॥

स्वयंभुवेस्वरूपम् ॥ शंभुजायाह्रीं ॥ ज्येष्ठायैस्वरूपम् ॥ हृदयंनमः ॥ ५४ ॥ श्रींशक्तिः ॥ ह्रींबीजम् ॥ पदोन्मितिः पदवर्णसंख्याभू

स्वयंभुवेशंभुजायाज्येष्ठायैहृदयांतिकः ॥ मनुः सप्तदशार्णोयंमुनिर्ब्रह्मास्यकीर्तितः ॥ ५४ ॥ छंदोष्टिर्ज्येष्ठलक्ष्मीस्तुदेवताशक्तिबीजके ॥ श्रीमायेमूलतोहस्तौप्रमृज्यांगंसमाचरेत् ॥ ५५ ॥ रामवेदयुगैकाक्षिनेत्रार्णैर्मनुसंभवैः ॥ पदानामष्टकंन्यस्येच्छिरोभ्रूमध्यवक्त्रके ॥ ५६ ॥ हृन्नाभ्याधारकेजानुपादयोस्तत्पदोन्मितिः ॥ भूचंद्रैकचतुर्वेदभूमिरामाक्षिवर्णकैः ॥ ५७ ॥ उद्यद्भास्करसन्निभास्मितमुखीरक्तांबरालेपनासत्कुंभंधनभाजनंसृणिमथोपाशंकरैर्बिभ्रती ॥ पद्मस्थाकमलेक्षणादृढकुचासौंदर्य्यवारांनिधिर्ध्यातव्यासकलाभिलाषफलदाश्रीज्येष्ठलक्ष्मीरियम् ॥ ५८ ॥ लक्षंजपेत्पायसेनजुहुयात्तद्दशांशतः ॥ आज्याक्तेनयजेत्पीठेवक्ष्यमाणेमहाश्रियम् ॥ ५९ ॥



रित्यादिवर्णैर्ज्ञेया ॥ ५५ ॥ ५६ ॥ ५७ ॥ ध्यानमाह ॥ उद्यदिति ॥ धनपात्रांकुशौदक्षिणयोः ॥ कुंभपाशौवामयोः ॥ ५८ ॥ ५९ ॥

१ ऐंह्रींश्रीं ज्येष्ठालक्ष्मिस्वयंभुवेह्रींज्येष्ठायैनमइतिसप्तदशार्णः २ अस्यज्येष्ठालक्ष्मीमंत्रस्यब्रह्माऋषिःअष्टिश्छंदः,ज्येष्ठालक्ष्मीदेवताश्रीं शक्तिः ह्रींबीजंममाभीष्टसिद्धयर्थे जपेविनियोगः ।

पीठशक्तीराह ॥ लोहिताक्षीति ॥ ६० ॥ ६१ ॥ गायत्रीमाह प्रणवइति ॥ स्पष्टम् ॥ ६२ ॥ ६३ ॥ लोकेशाइन्द्रादयः ॥ हेतयोव ज्राद्याः ॥ ६४ ॥ अन्नदमन्त्रमाह ॥ अथेति ॥ योमन्त्रःअन्नपूर्णावरणपूजनेभूमिश्रियोःपूजनेद्वियमाक्षरोद्वाविंशत्यर्णःपुराकथितः सोऽ

लोहिताक्षीविरूपाचकरालीनीललोहिता ॥ समदावारुणीपुष्टिरमोघाविश्वमोहिनी ॥ ६० ॥ तत्पीठ शक्तयः प्रोक्तादिक्षुमध्येचतायजेत् ॥ प्रयच्छेदासनंतस्यैगायत्र्यावक्ष्यमाणया ॥ ६१ ॥ प्रणवोरक्तज्ये ष्ठायैविद्महेपदमंततः ॥ नीलज्येष्ठापदंपश्चाद्यैधीमहिततः पदम् ॥ ६२ ॥ तन्नोलक्ष्मीः पदंप्रोच्यचोद यादितिचोच्चरेत् ॥ गायंत्र्येषासमाख्याताकेसरेष्वंगपूजनम् ॥ ६३ ॥ मातरः पत्रमध्येषुबाह्येलोकेश हेतयः ॥ इत्थंजपादिभिः सिद्धोमनुर्दद्यादभीप्सितम् ॥ ६४ ॥ अथान्नदमनोर्वक्ष्येसाधनंयःपुरोदितः॥ अन्नपूर्णावृतौभूमिश्रीयागेद्वियमाक्षरः ॥ ६५ ॥ तारभूश्रीपुटोजेप्योमुनिरस्यंचतुर्मुखः ॥ छन्दोनिचृ तिराख्यातंदेवतेवसुधाश्रियौ ॥ ६६ ॥

दोमनुः । अन्नंमह्यन्नंमेदेह्यन्नाधिपतयेममान्नंप्रदापयस्वाहेतिसप्रणवभूर्बीजयश्रीबीजसंपुटोष्टाविंशतिवर्णः ॥ ६५ ॥ ६६ ॥ षडङ्गमाह ॥ अन्नमहीति ॥ षडंगमन्त्राः ॥ ध्रुवादिकाःप्रणवाद्याः॥ दीर्घयुक्तेभूश्रीबीजेअन्तेयेषांते ॥ विनेत्रानेत्रहीनाःपश्चैव॥पश्चां

भूबीजंबीजमस्योक्तंश्रीबीजंशक्तिरीरिता ॥ अन्नंमहीतिहृदयमन्नंमेदेहिमस्तकम् ॥ ६७ ॥ शिखात्वन्ना धिपतयेममान्नंचप्रदापय ॥ वर्मोक्तंस्वाहयाचास्त्रमंगमन्त्राध्रुवादिकाः ॥ ६८ ॥ षड्दीर्घारूढभूमिश्रीबी जांताः परिकीर्तिताः ॥ विनेत्राअपदुग्धाब्धौस्वर्णदीपेतुतेस्मरेत् ॥ ६९ ॥ कल्पद्रुमाधोमणिवेदिका यांसमास्थितेवस्त्रविभूषणाढ्ये ॥ भूमिश्रियौवांछितवामदक्षेसंचिंतयेद्देवमुनीन्द्रवंद्ये ॥ ७० ॥ लक्षमेकं जपेन्मंत्रंतद्दशांशंघृतप्लुतैः अन्नैर्हुत्वायजेत्पीठेवैष्णवेवसुधाश्रियौ ॥ ७१ ॥ विमलोत्कर्षिणीज्ञान क्रियायोगभिधातथा ॥ प्रह्वीसत्यातथेशानानुग्रहापीठशक्तयः ॥ ७२ ॥

गानिमनोर्यत्रतत्रनेत्रमनुंत्यजेदित्युक्तेः ॥ ओं अन्नमहिग्लांश्रींहृत् ॥ ओं अन्नंदेहिग्लींश्रींशिरइत्यादि॥ ६७ ॥६८॥६९॥७०॥७१॥ वैष्णवीपीठशक्तीराह ॥ विमलेति ॥ ७२ ॥



---

१ॐ रक्तज्येष्ठायैविद्महेनीलज्येष्ठायैधीमहि । तन्नोलक्ष्मीःप्रचोदयात् । २ ॐग्लौं श्रींअन्नमह्यन्नंमेदेह्यन्नाधिपतयेममान्नंप्रदापयस्वाहा श्रींग्लौंश्रींमित्य ष्टाविंशत्यर्णः । ३ अस्यज्येष्ठालक्ष्मीमंत्रब्रह्मा ऋषिःनिचृद्गायत्रीछन्दःवसुधाश्रियौदेवतेग्लौंबीजंह्रींशक्तिःममाभीष्टप्राप्तौजपेविनियोगः ।

पीठमंत्रमाह ॥ तारामिति ॥ ओंनमोभगवतेविष्णवेसर्वभूतात्मसंयोगपद्मपीठात्मनेनमः ॥ ७३ ॥ ७४॥७५॥७६॥७७॥७८॥७९॥

तारंनमोभगवतेविष्णवेसर्ववर्णकाः ॥ भूतात्मसयोगपदंयोगपद्मपदंततः ॥ ७३ ॥ पीठात्मनेनमोंतोयंपीठस्यमनुरीरितः ॥ दद्यादासनमंतेनमूलेनवाहनादिकम् ॥ ७४ ॥ अङ्गानीष्ट्वार्चयेद्दिक्षुभूवह्निजलमारुतान् ॥ निवृत्तिंचप्रतिष्ठांचविद्यांशांतिंविदिक्षुच ॥ ७५ ॥ अष्टशक्तीर्बलाकाचविमलाकमला तथा ॥ वनमालाविभीषाचमालिकाशांकरीपुनः ॥ ७६ ॥ पूर्वादिदिक्षुप्रयजेदष्टमीवसुमालिका ॥ शक्राद्याना युधैर्युक्तान्स्वस्वदिक्षुसमर्चयेत् ॥७७॥ इत्थंसपरिवारेयोधरालक्ष्म्यौजपादिभिः ॥ आराधयेत्सलभतेमहतीमन्नसंपदम् ॥ ७८ ॥ आज्याक्तैश्वतिलैर्बिल्वसमिद्भिर्जुहुयाच्छ्रिये ॥ साज्येनपायसेनापिफलैःपत्रैश्चबिल्वजैः ॥७९॥ जपतामुंमहामंत्रंहोमः कार्योदिनेदिनेः ॥ दशसंख्यः कुबेरस्य मनुनेध्मैर्वटोद्भवैः ॥ ८० ॥ तारोवैश्रवणायाग्निप्रियांतोष्टाक्षरोमनुः ॥ होमकालेकुबेरंतुचिंतयेदग्निमध्यगम् ॥ ८१ ॥

इध्मैस्समिद्भिः ॥ ८० ॥ कुबेरमन्त्रमाह ॥ तारइति ॥ तारओं अग्निप्रियास्वाहा ॥ ८१ ॥

कुबेर ध्यानमाह ॥ धनेति ॥ रत्नकरण्डोदक्षे ॥ ८२ ॥ ८३ ॥ ८४ ॥ प्रत्यंगिरामाह ॥ दीर्घेति ॥ मरुत्यकारः दीर्घेन्दुयुक् ॥ आबिन्दुयुतः यां ॥ ब्रह्माकः ॥ लोहितःपः ॥ तत्संस्थंमांसलः ॥ ल्पयंतिनोरयः ॥ क्रूरांकृत्यांवधूमिवतांब्रह्मस्वरूपम् ॥ सदीर्घोणःणा॥

धनपूर्णस्वर्णकुंभंतथारत्नकरंडकम् ॥८२॥ हस्ताभ्यांविप्लुतंखर्वंकरपादंचतुंदिलम्॥ वटाधस्ताद्रत्नपीठोपविष्टंसुस्मितानननम् ॥ ८३ ॥ एवंकृतहुतोमंत्रीलक्ष्म्याजपतिवित्तपम् ॥ अथप्रत्यंगिरांवक्ष्येपरकृत्याविमर्दिनीम् ॥ ८४ ॥ दीर्घेन्दुयुग्मरुद्ब्रह्मामांसलोहितसंस्थिताम् ॥ यतिनोरयचार्यक्रूरांकृत्यांसमुच्चरेत् ॥ ८५ ॥ वधूमिवपदंपश्चात्तांब्रह्मातेसदीर्घणः ॥ पनिर्णुमइत्यंतेप्रत्यक्कर्तारमृच्छतु ॥ ८६ ॥ तारमायापुटोमंत्रः स्यात्सप्तत्रिंशदक्षरः ॥ ब्रह्मानुष्टुप्मुनिश्छंदोदेवीप्रत्यंगिरेरिता ॥ ८७ ॥

अपनिर्णुद्मइतिस्वरूपम् प्रत्यक्कर्तारमृच्छतुस्वरूपम् प्रणवमायाबीजसंपुटः ॥ ८५ ॥ ८६ ॥ ८७ ॥

---

१ ॐ वैश्रवणायस्वाहेत्यष्टार्णः ।

ओं ह्रीं यां कल्पयंतिनोंरयः क्रूरांकृत्यांवधूमिवह्लांब्रह्मणाअपनिर्णुद्मः प्रत्यक्कर्तारमृच्छतुह्रींओमितिसप्तत्रिंशदक्षरः । अस्यप्रत्यंगिरामन्त्रस्यब्रह्माऋषिः अनुष्टुप्छन्दः देवीप्रत्यंगिरादेवताओंबीजंह्रींशक्तिः ममाखिलावाप्तयेजपेविनियोगः ।

षडंगमाह ॥ अष्टभिरिति ॥ तोयनिधिभिश्चतुर्भिः ॥ दीर्घयुक्पार्वतीमायाबीजंपरंयेषाम् ॥ प्रणवआद्योयेषाम् ॥ जातयोहृदयायनमइत्यादयस्तत्संयुतैरष्टादिवर्णैःषडंगम् ॥ ८८ ॥ पदन्यासमाह ॥ शिरइति प्रणवमायासंपुटानिचतुर्दशपदानिशिरआदिषुन्यसेत् ॥ तेषांवर्णसंख्याक्रमात् एकचतुरेकत्रिद्विद्विद्विव्द्येकत्रिपञ्चद्वित्रित्रिवर्णैर्बोध्या ॥ ओंह्रींयांह्रींशिरसीत्यादि ॥ ८९ ॥ ९० ॥ ध्यानमाह

बीजशक्तितारमायेकृत्वानाशेनियोजनम् ॥ अंष्टभिस्तोयनिधिभिर्युगैर्वेदैश्चपंचभिः ॥ ८८ ॥ वसुभिर्मंत्रजैर्वर्णैर्दीर्घयुक्पार्वतीपरैः ॥प्रणवाद्यैःषडंगानिकल्पयेज्जातिसंयुतैः ॥ ८९ ॥ शिरोभ्रूमध्यवक्त्रेषुकंठेबाहुद्वयेहृदि ॥ नाभावूर्वोर्जानुनोश्चपदानिपदयोर्न्यसेत् ॥९०॥ चतुर्दशक्रमान्मंत्रीतारमायापुटान्यपि ॥ आशांबरामुक्तकचाघनच्छविर्ध्येयासचर्मासिकराहिभूषणा ॥ दंष्ट्रोग्रवक्त्राग्रसिताहितान्वयाप्रत्यंगिराशंकरतेजसेरिता ॥ ९१ ॥ ध्यायन्नेवंजपेन्मंत्रमयुतंतद्दशांशतः ॥ अपामार्गेध्मराज्याज्यहविर्भिर्जुहुयात्ततः ॥ ९२ ॥ अन्नपूर्णासनेचार्चेदंगलोकेश्वरायुधः ॥ एवंसिद्धमनुर्मंत्रीप्रयोगेषुशतंजपेत् ॥ ९३ ॥

॥ आशेति ॥ आशांबरानग्ना ॥ घनच्छविर्मेघश्यामा ॥ग्रसितोऽहितानांरिपूणामन्वयोवंशोयया ॥ असिर्दक्षिणे ॥९१॥९२॥९३॥ बलिमंत्रमाह ॥ योमइति ॥ ओंयोमपूर्वगतःपाप्मापापकेनेहकर्मणाइन्द्रस्तंदेवराजोभञ्जयतुअजयतुमोहयतुनाशयतुमारयतुकलिन्तस्मैप्रयच्छतुकृतंममशिवंममशांतिःस्वस्तत्ययनंचास्तु ॥ इतिबलिमंत्रः ॥ अनेनप्राच्यांबलिंदद्यात् ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ अस्मिन्मन्त्रे ॥ पूर्वेत्यस्यस्थानेअग्न्यादिपदम् ॥ इन्द्रइत्यस्यस्थानेअग्निरित्यादि ॥ देवराजइत्यत्रतेजोराजइत्यादिऊहान्कृत्वादशमंत्र

जुहुयाच्चशतंदिक्षुदशमंत्रैर्हरेद्बलिम् ॥ योगमेपूर्वगतः पाप्मापापकेनेहकर्मणा ॥९४॥ इंद्रस्तंदेउच्चार्यराजांतेभंजयत्विति ॥ अंजयत्विचोच्चार्यमोहयत्वितिचोच्चरेत् ॥ ९५॥ नाशयतुपदंपश्चान्मारयत्वित्यतोबलिम्॥तस्मैप्रयच्छतुकृतंममांतेचशिवंमम ॥ ९६ ॥ शांतिःस्वस्त्ययनंचास्तुबलिमंत्रउदाहृतः ॥ प्रणवाद्योष्टषष्टवर्णस्तैनेववितरेद्बलिम् ॥९७॥ अस्मिन्मंत्रेपूर्वपदस्थानेग्न्यादिपदंवदेत् ॥ अग्निरित्यादिचपठेदिन्द्रइत्यादिकेस्थले ॥ ९८ ॥ एवंतुदशमंत्राः स्युस्तैस्तत्तद्दिग्बलिंहरेत् ॥ इत्थंकृतेशत्रुकृताकृत्याक्षिप्रंविनश्यति ॥ ९९ ॥

विधेयास्तैस्तस्यां दिशिबलिंदद्यात् ॥ यथा ॥ योमेऽग्निगतःपाप्मापापकेनेहकर्मणाअग्निस्तंजोराजोभञ्जयत्वित्यादियोमेदक्षिणगतःयमस्तंप्रेतराजइत्यादि ॥ ९८ ॥ ९९ ॥

प्रत्यंगिरामालामात्रमाह ॥ तारइति ॥ तार:प्रणवः ॥ मायाह्रीं ॥ सहक्जलम् ॥ इयुतोवः वि ॥ ॥ १०० ॥ १०१ ॥ १०२ ॥ १०३॥ ॥ १०४ ॥ शरसूर्य्याक्षर: ॥ पञ्चविंशत्यधिकशतार्णः ॥ ओं ह्रींनमःकृष्णवाससेशतसहस्रहिंसिनिसहस्रवदनेमहाबलअपराजितेप्रत्यंगिरेपरसैन्यपरकर्मविध्वंसिनिपरमन्त्रोत्सादिनिसर्वभूतदमनिसर्वदेवान्बंधबंधसर्वविद्याश्छिंधि २ क्षोभय २ परयंत्राणिस्फोटय २

अथप्रत्यंगिरामालामंत्रसिद्धिः प्रकीर्त्यते ॥ तारोमायानमः कृष्णंवाससेशतवर्णकाः ॥१००॥ सहस्रहिंसिनिपदंसहस्रवदनेपुनः ॥ महाबलेपदंश्चादुच्चरेपदराजिते ॥ १ ॥ प्रत्यंगिरेपरसैन्यपरकर्मसहग्जलम् ॥ ध्वंसिनिपरमंत्रोत्सादिनिसर्वपदंततः॥२॥ भूतांतेदमनिप्रांतेसर्वदेवान्समुच्चरेत् ॥ बंधयुग्मंसर्वविद्याश्छिंधि युक्क्षोभयद्वयम् ॥३॥ परयंत्राणिसंकीर्त्यस्फोटयद्वितयंपठेत् ॥ सर्वांते श्रृंखलाउक्त्वा त्रोटयद्वितयंज्वलत् ॥४॥ ज्वालाजिह्वेकरालांते वदनेप्रत्यमुच्चरेत्॥गिरेमायानमोंतोयंशरसूर्य्याक्षरोमनुः ॥ ५ ॥ ऋष्यादिकंपूर्वमुक्तंमाययास्यात्षडंगकम्॥ध्यायेत्प्रत्यंगिरांदेवींसर्वशत्रुविनाशिनीम् ॥६॥ सिंहारूढातिकृष्णंत्रिभुवनभयकृद्रूपमुग्रंवहंतीज्वालावक्त्रावसानानप्रवसनयुगंनीलमण्याभकांतिः ॥ शूलंखड्गंवहंतीनिजकरयुगलेभक्तरक्षैकदक्षासेयंप्रत्यंगिरासंपयतुरिपुभिर्निर्मितंवोभिचारम् ॥ १०७ ॥

सवश्रृंखलास्त्रोटय२ज्वलज्ज्वालाजिह्वकरालवदनेप्रत्यंगिरेह्रींनमइति ॥ १०५ ॥१०६॥ ध्यानमाह ॥ सिंहेति॥खड्गोदक्षिणे ॥१०७॥ ॥ १०८ ॥ १०९ ॥ शत्रुनाशकमंत्रमाह ॥ प्रणवइति ॥ प्रणवः ॐ ॥ सेन्दुःकेशवः ॥ अं ॥ सेन्दवः पंचवर्गाद्याः कंचंटंतंपं ॥११०॥ चन्द्रान्वितंवियत्हं ॥ रान्तंलः ॥ सद्योजातः ॥ शशांकोबिन्दुस्ताभ्यांयुक्तःलों ॥ मायाह्रीं ॥ कर्णचद्राढयःउ ॥ बिन्दुयुतोऽत्रिर्दुः ॥

अयुतंप्रजपेन्मंत्रंसहस्रंतिलराजिकाः ॥ हुत्वासिद्धमनुंमंत्रप्रयोगेषुशतंजपेत् ॥ १०८ ॥ ग्रहभूतादिकाविष्टंसिंचेन्मंत्रंजपञ्जलैः ॥ विनाशयेत्परकृतंयंत्रमंत्रादिकर्मणाम् ॥ ९ ॥ मंत्रंविरोधिशमकंप्रवक्ष्येषोडशाक्षरम् ॥ प्रवणःकेशवःसेंदुर्वर्गाद्याःपंचसेंधवः ॥ १० ॥ वियचंद्रान्वितंरांतसद्योजातःशशांकयुक् ॥ मायात्रिकर्णचंद्राढ्योभृगुःसर्गीसवर्मफट् ॥ ११ ॥ स्वाहांतःषोडशार्णोयंमंत्रःशत्रुविनाशनः ॥ विधाताष्टिर्ऋषिश्छंदःपर्वताब्ध्यग्निवायवः ॥ १२ ॥ धराकाशौमहापूर्वादेवताःपरिकीर्तिताः ॥ हुंबीजंपार्वतीशक्तिर्माययातुषडंगकम् ॥ ११३ ॥

सर्गीभृगुःस ॥ वर्महुं ॥ १११ ॥ फट्स्वाहास्वरूपम् ॥ विधाताब्रह्मा ॥ महापूर्वाःपर्वतादयः ॥ महापर्वतमहासमुद्रमहाग्निमहावायुमहापृथ्वीमहाकाशाःषड्देवताः ॥ पार्वतीह्रीं ॥ माययादीर्घाढययाषडङ्गम् ॥ ११२ ॥ ११३ ॥

ॐ अंकंचंटंतंपंहलोंह्रींहुसन्हुंफट्स्वाहेतिषोडशार्णः । २ अस्यमंत्रस्यब्रह्माऋषिः अष्टिछंदः महापर्वतमहाब्धिमहाग्निमहावायुमहाधरामहाकाशः षड्देवता हुंबीजंह्रींशक्तिःममाभीष्ट सिद्ध्यर्थेजपेविनियोगः ।

षडङ्गक्रमेण ध्यानान्याह ॥ नानेति ॥११४॥ अकूपारं समुद्रम् ॥११५॥११६॥ प्राणरूपेणविश्वंजीवयतीतिविश्वजीवनम् ॥११७॥

नानारत्नार्चिराक्रांतंवृक्षांभःस्रवणैर्युतम् ॥ व्याघ्रादिपशुभिर्व्याप्तंसानुयुक्तंगिरिंस्मरेत् ॥११४॥ मत्स्यकूर्मादिबीजाढ्यंनवरत्नसमन्वितम् ॥ घनच्छायंसकल्लोलमकूपारंविचिंतयेत् ॥१५॥ ज्वालावतीसमाक्रांतजगत्त्रितयमद्भुतम् ॥ पीतवर्णंमहावह्निंसंस्मरेच्छत्रुशांतये ॥ १६ ॥ धरासमुत्थरेण्वौघमलिनंरुद्धभूदिवम् ॥ पवनंसंस्मरेद्विश्वजीवनंप्राणरूपतः ॥ १७ ॥ नदीपर्वतवृक्षादिकलिताग्रामसंकुला ॥ आधारभूताजगतोध्येयापृथ्वीहमंत्रिणा ॥ १८ ॥ सूर्यादिग्रहनक्षत्रकालचक्रसमन्वितम् ॥ निर्मलंगगनंध्यायेत्प्राणिनामाश्रयप्रदम् ॥ १९ ॥ एवंषड्देवताध्यात्वासहस्राणितुषोडश ॥ जपेन्मंत्रंदशांशेनषड्द्रव्यैर्होममाचरेत् ॥ १२० ॥

॥ ११८ ॥ ११९ ॥ ११० ॥

यथाभागंसमषष्ट्यधिकंशतद्वयंप्रत्येकम् । ।१२१ ॥ १२२ ॥ प्रयोगमाह ॥ अकारमिति ॥ १२३ ॥ १२४ ॥ तदग्निमंचकारंया म्येदक्षिणस्याम् ॥ रुधआरुधोजगद्दाहोयेनलंकृतेतिवापाठः ॥ १२५ ॥ तृतीयेतिटम् ॥ १२६ ॥ तुरीयेति ॥ चतुर्थपञ्चमवर्गयोरा

व्रीहयस्तंदुलाआज्यंसर्षपाश्चयवास्तिलाः ॥ एतैर्हुत्वायथाभागंपीठेपूर्वोदितेयजेत् ॥ १२१ ॥ अङ्गदिक्पालवज्राद्यैरेवंसिद्धोभवेन्मनुः ॥ शत्रूपद्रवमापन्नोयुंज्यात्तन्नाशयेमनुम् ॥ २२ ॥ अकारंपर्वताकारंधावंतंशत्रुसम्मुखम् ॥पतनोन्मुखमत्युग्रंप्राच्यांदिशिविचिन्तयेत् ॥२३॥ ककारंक्षुब्धकल्लोलंप्लाविताखिलभूतलम् ॥ समुद्ररूपिणंभीमंप्रतीच्यांदिशिसंस्मरेत् ॥ २४ ॥ वर्णंतदग्रिमंज्वालासंघव्याप्तनभस्तलम् ॥ याम्येरुधजगद्दाहंस्मरेत्प्रलयपावकम् ॥ २५ ॥ तृतीयवर्गप्रथमंप्रकंपितजगत्त्रयम् ॥ युगांतपवनाकारमुत्तरस्यांदिशिस्मरेत् ॥२६॥ तुरीयपंचमाद्यार्णौपृथ्वीगगनरूपिणौ ॥ शत्रुवर्गंबाधमानौचिन्तयेन्नियतात्मवान् ॥ २७ ॥ तदग्रिमंवर्णयुगंशत्रोर्निःश्वासपद्धतिम् ॥ निरुंधानंस्मरेन्मंत्रीविदधद्द्विपुमाकुलम् ॥२८॥मायादिवर्णत्रितयंशत्रोर्नेत्रश्रुतीमुखम् ॥प्रत्येकंतुनिरुंधानंचिन्तयेत्साधकोत्तमः ॥१२९॥

दिमार्णौतपं॥ १२७॥ तदग्रिमवर्णयुगंद्वयं हंलोमिति ॥ १२८ ॥ मायांदिवर्णत्रितयंह्रींहुंसइति ॥ १२९ ॥

वर्मणाहुंकारेणक्षोभितमस्त्रंफट्कारंरिपोराधारादग्निमुत्थाप्यरिपुदेहंदहंतंस्मरेत् ॥ १३० ॥ मण्डलमेकोनपञ्चशद्दिनानि ॥ १३१ ॥ मारणंकुर्वतःप्रायश्चित्तमाह एवमिति ॥ १३२ ॥ इतिमंत्रमहोदधिनौकायामन्नपूर्णादिनिरूपणंनामएवमस्तरंगः ॥ ९ ॥ बगलामुखीमाह ॥ प्रणवइति ॥ गगनंह: ॥ पृथ्वीलः ॥ शांतिः ई ॥ विंदुश्चतैर्युतंह्लीं ॥ बगलामुखस्वरूपं ॥ गदीखः ॥ साक्षइयुतःक्षि

वर्मसंक्षोभितंत्वस्त्रंरिपोराधारदेशतः ॥ उत्थाप्यवह्निंतद्देहंप्रदहन्समनुस्मरेत् ॥ १३० ॥ एवंवर्णान्स्मरन्मंत्रंजपेन्मंत्रीसहस्रकम् ॥ मंडलत्रितयादर्वाङ्मारयत्येवविद्विषम् ॥ ३१ ॥ एवंयःकुरुतेकर्मप्राणायामजपादिभिः॥ संशोधयित्वास्वात्मानंस्वरक्षायैहरिंस्मरेत्॥१३२॥इति श्रीमंत्रमहोदधावन्नपूर्णादिमंत्रप्रकाशनंनामनवमस्तरंगः ॥ ९ ॥ अथप्रवक्ष्येशत्रूणांस्तंभिनीबगलामुखी ॥ प्रणवोगगनंपृथ्वीजांतिबिंदुयुतंभम ॥ १ ॥ लामुखीक्षोगदीसर्वदुष्टानांवाहलींदुयुक् ॥ मुखंपदंस्तंभयांवे जिह्वांकीलयवर्णकाः ॥ २ ॥ बुद्धिंविनाशयांतेतुबीजंतारोग्निसुन्दरी ॥ षट्त्रिंशमक्षरोमंत्रोनारदोमुनिरेस्यतु ॥ ३ ॥

॥ सर्वदुष्टानांवास्वरूपम् ॥ इंदुयुक्हलींच ॥ मुखंपदमित्यादिस्वरूपम बीजंह्लीं ॥ तारओं ॥ अग्निसुन्दरीस्वाहा ॥ १ ॥ २ ॥ ३ ॥ षडंगमाह ॥ नेत्रेति ॥ अक्षाणिपंच ॥ ४ ॥ ध्यानमाह ॥ ॥ सौवर्णेति ॥ मुद्गरवज्रौदक्षयोः पाशरिपुजिह्वेवामयोः ॥ ५ ॥ ६ ॥ ७ ॥

छंदोपिबृहतीज्ञेयंदेवताबगलामुखी ॥ नेत्राक्षंसायकनेवपंचकैःष्ठाभिरंगकम् ॥ ४ ॥ सौवर्णासनसंस्थितांत्रिनयनांपीतांशुकोल्लासिनीं हेमाभांगरुचिंशशांकमुकुटांसच्चंपकस्रग्युताम् ॥हस्तैर्मुद्गरपाशवज्ररसनाः संबिभ्रतींभूषणैर्व्याप्तांगींबगलामुखींत्रिजगतांसंस्तंभिनींचिंतयेत् ॥ ५ ॥ एवंध्यात्वाजपेल्लक्षयुतंचंपकोद्भवैः ॥ कुसुमैर्जुहुयात्पीठेपूर्वोक्तेपूजयेदिमाम् ॥६॥ चन्दनागुरुचंद्राद्यैःपूजार्थं यंत्रमालिखेत् ॥ त्रिकोणषड्दलाष्टास्रषोडशारधरापुरम् ॥ ७ ॥ मध्येसंपूजयेद्देवींकोणेसत्त्वादिकान्गुणान् ॥ षट्कोणेषुषडंगानिमातृभैरवसंयुताः ॥ ८ ॥ संपूज्याष्टदलेपद्मषोडशारेयजेदिमाः ॥ मंगलास्तंभिनीचैवजृंभिणीमोहिनीतथा ॥ ९ ॥ वश्याचलाबलाकाचभूधराकल्मषाभिधा ॥ धात्री चकलनाकालकर्षिणीभ्रामिकापिच ॥ १० ॥ मंदगमनाचभोगस्थाभाविकाषोडशीस्मृता ॥ भृगृहस्यचतुर्दिक्षुपूर्वादिषुयजेत्क्रमात् ॥ ११ ॥ गणेशंवटुकंचापियोगिनींक्षेत्रपालकम् ॥ इंद्रादींश्चततो बाह्योनिजायुधसमन्वितान् ॥१२॥

॥ ८ ॥ भैरवसंयुतामारष्टदलेसंपूज्यषोडशदलेइमामङ्गलाद्यायजेत् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥



---

१ ओं ह्लींवगलामुखिसर्वदुष्टानांवाचंमुखंपदंस्तंभयजिह्वांकीलय बुद्धिंविनाशय ह्लींओंस्वाहेतिषट्त्रिंशदर्णः । २ अस्य श्रीवगलामुखीमंत्रस्यनारदऋषिः बृहती छन्दः वगलामुखीदेवताममाखिलावाप्तयेजपेविनियोगः ।

इत्थंसिद्धमनुर्मंत्रीस्तंभयेद्देवतादिकान् ॥ पीतवस्त्रस्तदासीनः पीतमाल्यानुलेपनः ॥ १३ ॥ पीतपुष्पै र्यजेद्देवींहरिद्रोत्थस्रजाजपन् ॥ पीतांध्यायन्भगवतींभयोगेष्वयुतंजपेत् ॥ १४ ॥ त्रिमध्वक्ततिलैर्होमो नृणांवश्यकरोमतः ॥ मधुरत्रितयाक्तैः स्यादाकर्षोलवणैर्ध्रुवम् ॥ १५॥ तैलाभ्यक्तैर्निबपत्रैर्होमोविद्वेष कारकः ॥ तालल्लोणहरिद्राभिर्द्विषांसंस्तंभनंभवेत् ॥ १६ ॥ अंगारधूमंराजीश्चमाहिषंगुग्गुलंनिशि ॥ श्मशानपावकेहुत्वानाशयेदचिरादरीन् ॥ १७ ॥ गरुतोगृध्रकाकानांकटुतैलंबिभीतकम् ॥ गृहधूमंचि तावह्नौहुत्वाप्रोच्चाटयेद्रिपून् ॥ १८ ॥ दूर्वागुडूचीलाजान्योमधुरत्रितयान्वितान् ॥ जुहोतिसोखिलात्रो गाञ्छमयेद्दर्शनादपि ॥ १९ ॥ पर्वताग्रेमहारण्येनदीसंगेशिवालये ॥ ब्रह्मचर्यव्रतोलक्षंजपेदखिलसि द्धये ॥ २० ॥ एकवर्णगवीदुग्धंशर्करामधुसंयुतम् ॥ त्रिशतंमंत्रितंपीतंहन्याद्विषपराभवम् ॥ २१ ॥ श्वेतपालाशकाष्ठेनरचितेरम्यपादुके ॥ अलक्तरंजितेलक्षंमंत्रयेन्मनुनामुना ॥ २२ ॥ तदारूढः पुमा न्गच्छेत्क्षणेनशतयोजनम् ॥ पारदंचशिलांतालपिष्टंमधुसमन्वितम् ॥ २३ ॥ मनुनामंत्रयल्लक्षंलिपे त्तेनाखिलांतनुम् ॥ अदृश्यः स्यान्नृणामेषआश्चर्यंदृश्यतामिदम् ॥ २४ ॥

॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ गरुतःपक्षान् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

यंत्रमाह ॥ षट्कोणइति ॥ धत्तूररसाक्तहरिद्राचूर्णेनषट्कोणेऽमुकंस्तंभयेतिवर्णयुतंह्लीमितिबीजंविलिख्यमंत्रशेषार्णैःसंवेष्ट्योपरिचतुरस्रे णवेष्टितंपीतसूत्रवीतंकृत्वा भ्रमत्कुंभकारचक्रस्थमृदारचितवृषोदरेप्रक्षिप्यहरितालेनसंलिप्यवृषंप्रत्यहंपूजयेत् स्तम्भनफलम् ॥ २५ ॥

षट्कोणेविलिखेद्बीजंसाध्यनामान्वितंमनोः ॥ हरितालनिशाचूर्णैरुन्मत्तरससंयुतैः ॥ २५ ॥ शेषाक्षरैः समावीतंधरागेहविराजितम् ॥ तद्यंत्रंस्थापितप्राणंपीतसूत्रेणवेष्टयेत् ॥ २६ ॥ भ्राम्यत्कुलालचक्रस्थां गृहीत्वामृत्तिकांतया ॥ रचयेद्वृषभंरम्यंयंत्रंतन्मध्यतः क्षिपेत् ॥ २७ ॥ हरितालेनसंलिप्यवृषंप्रत्यहम र्चयेत् ॥ स्तंभयेद्द्विद्विषांवाचंगतिकार्य्यपरंपराम् ॥ २८ ॥ आदायवामहस्तेनप्रेतभूमिस्थखर्परम् ॥ अंगारेणचितास्थेनतत्रयंत्रंसमालिखेत् ॥ २९ ॥ मंत्रितंनिहितंभूमौरिपूणांस्तंभयेद्गतिम् ॥ प्रेतवस्त्रेलि खेद्यंत्रमंगारेणैवतत्पुनः ॥ ३० ॥ मंडूकवदनेन्यस्येत्पीतवस्त्रेणवेष्टितम् ॥ पूजितंपीतपुष्पैस्तद्वाचंसं स्तंभयेद्द्विषाम् ॥ ३१ ॥

॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

वृषाआटरूषकः ॥ ३२ ॥ ३३ ॥ ३४ ॥ स्वप्नवाराहीमाह ॥ वेदादीति ॥ वेदादिबीजान् ॐ ॥ मायाह्रीं ॥ हृत्नमः ॥ जलंवः पावकोरः ॥ तौदीर्घौवारा ॥ सदृक्खंहःहि ॥ मेधाधः ॥ सधयुक्ओयुताघो ॥ रेखप्नंस्वरूपम् । सर्गिणौठौ ॥ ठःठः ॥ कृशानुवल्लभा

यद्भूमौभविताद्दिव्यंतत्रयंत्रंसमालिखेत् ॥ मार्जितंतद्वृषापत्रैर्दिव्यस्तंभनकृद्भवेत् ॥ ३२ ॥ इंद्रवारुणिकामूलंसप्तशोमनुमंत्रितम् ॥ क्षिप्तंजलेदिव्यकृतांजलस्तंभनकारकम् ॥ ३३ ॥ किंभूरिणासाधकेन मंत्रः सम्यगुपासितः ॥ शत्रूणांगतिबुद्ध्यादेः स्तंभनोनात्रसंशयः ॥३४॥ उच्यतेस्वप्नवाराहीजनतावशकारिणी ॥ वेदादिबीजंमायाचहृद्दीर्घौजलपावकौ ॥३५॥ खंसदृक्सधयुग्मेधारेस्वप्नंसर्गिणौचठौ॥ कृशानुवल्लभांतोयंमंत्रः पंचदशाक्षरः ॥ ३६ ॥ ईश्वरोजगतीस्वप्नवाराहीमुनिपूर्विकाः ॥ तारो बीजं चहृल्लेखाशक्तिष्ठौकीलकंमतम् ॥ ३७ ॥ द्विपंचनेत्रैर्हस्तौक्षियुग्मार्णौरंगकंमनोः पादलिंगकटीकंठगंडाक्षिश्रुतिनासिके ॥ विन्यस्यमंत्रजान्वर्णांश्चिन्तयेत्परदेवताम् ॥ ३८ ॥

यस्वाहा ॥ ३५ ॥ ३६ ॥ ३७ ॥ वर्णन्यासमाह ॥ पादेति ॥ लिङ्गकंठेमूर्ध्निएकैकः ॥ अन्यत्र द्वौद्वौ ॥ ३८ ॥

ध्यानमाह ॥ मेघेति ॥ कोलास्यांवराहवदनाम् ॥ दंष्ट्रातलेवर्तमानयाऽचलयावसुधयाशोभिताम् ॥ असिलतां कुशौदक्षयोः ॥

मेघश्यामरुचिंमनोहरकुचांनेत्रत्रयोद्भासितांकोलास्यांशशिशेखरामचलयादंष्ट्रातलेशोभिनीम् ॥ बिभ्राणांस्वकरांबुजैरसिलतांचर्मापिपाशंसृणिंवाराहीमनुचिंतयेद्धयवरारूढांशुभालंकृतिम् ॥ ३९ ॥ लक्षं जपेद्दशांशेननीलपद्मैस्तिलैःशुभैः ॥ जुहुयात्पूर्वसंप्रोक्तेपीठेरूपूजयेदिमाम् ॥ ४० ॥ त्रिकोणेतांसमाराध्यषट्कोणेष्वङ्गदेवताः ॥ षोडशारेयजेच्छक्तीर्वक्ष्यमाणास्तुषोडश ॥ ४१ ॥ उच्चाटनीतदीशीचशोषणीशोषणीश्वरी ॥ मारणीमारणीशीचभीषणीभीषणीश्वरी ॥ ४२ ॥ त्रासनीत्रासनीशीचकंपनीकंपनीश्वरी ॥ आज्ञाविवर्तिनीपश्चादाज्ञाविवर्तिनीश्वरी ॥ ४३ ॥ वस्तुजातेश्वरीचाथसर्वसंपादनीश्वरी ॥ एताःपूज्याश्चतुर्थ्यंताःप्रणवाद्यानमोन्विताः ॥ ४४ ॥ यजेदष्टदलेपद्मेमातृभैरवसंयुताः ॥ लोकपालान्दशदलेद्वितीयेहेतिसंयुतान् ॥ ४५ ॥ एवंसिद्धंमनुंमंत्रीकाम्यकर्मणियोजयेत् ॥ तर्पयेन्नारिकेलोत्थैर्जलैस्तीर्थोद्भवैरपि ॥ ४६ ॥

॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥



---

१ ओंह्रींनमोवाराहिघोरेस्वप्नंठः ठः स्वाहेतिपंचदशार्णः । २ अस्यस्व नवाराहीमंत्रस्यईश्वरऋषिः जगतीछंदः स्वप्नवाराहीदेवता ओं बीजंह्रींशक्तिः ठःठः कीलकंममाभीष्ट सिद्ध्यर्थेजपेविनियोगः ।

कृष्णपक्षइत्यारभ्यवशगाध्रुवमित्यंतएकोवश्यार्थप्रयोगः ॥ ४७ ॥ ४८ ॥ नृकाकाजानांनरवायसमेषाणामसृजारुधिरेण ॥ ४९ ॥

मानयेत्तरुणीवर्गान्सर्वकामार्थसिद्धये ॥ कृष्णपक्षेऽष्टमीघस्रेभूताहेवाकृतव्रतः ॥ ४७ ॥ चतुष्पथान्नदीकूलद्वयात्कौलालवेश्मनः ॥ मृदमानीयधत्तूररससंयुक्तयातया ॥ ४८ ॥ रचयेत्पुत्तलींरम्यांसाध्यासुस्थापनान्विताम् ॥ ततःप्रेतांबरेयंत्रंनृकाकाजासृजालिखेत् ॥ ४९ ॥ चितांगारयुजायोनिंषट्कोणंभूगुरान्वितम् ॥ तदंतर्मंत्रमालिख्यवेष्टयेन्मनुनामुता ॥ ५० ॥ साध्यमुच्चाटययुगंशोषयद्वितयंततः ॥ मारयद्वितयंचाथभीषयद्वितयंततः ॥ ५१ ॥ नाशयद्वितयंपश्चाच्छिरःकम्पययुग्मकम् ॥ ममाज्ञावर्तिनंपश्चात्कुरुसर्वाभिमार्णकाः ॥ ५२ ॥ तवस्तुजातंशब्दांतेसंपादययुगं ततः ॥ सर्वंकुरुयुगंस्वाहामुनिसप्ताक्षरोमनुः ॥ ५३ ॥

॥ ५० ॥ वेष्टनमंत्रमाह ॥ साध्यमिति ॥ ५१ ॥ शिरःस्वाहा ॥ स्पष्टमन्यत् ॥ ५२ ॥ मुनिसप्ताक्षरः सप्तसप्तत्यर्णः ॥ ५३ ॥

---

उक्तमार्गतः पूर्वोक्तविधिना ॥ ५४ ॥ ५५ ॥ ५६ ॥५७॥ यंत्रमाह ॥ कृत्वेति ॥ ५८ ॥ कामःक्लीं ॥ वाग्भवम् ऐं ॥ ५९ ॥ पाशम्आं ॥ मायांह्रीं सृणिंक्रों ॥ श्रियंश्रीं ॥ दीर्घकवचंहूं ॥ ६० ॥ पूर्वोक्ताउच्चाटनाद्याः ॥ ६१ ॥ दिक्पालबीजान्याह ॥ मांसमिति ॥

अनेनवेष्टितंयंत्रंकृतंदेवीप्रतिष्ठितम् ॥ पुत्तल्याहृदिविन्यस्ययजेत्तामुक्तमार्गतः ॥ ५४ ॥ तदग्रेप्रजपेन्मंत्रंरात्रावेकांतमाश्रितः ॥ सहस्रंसाष्टकंभूयः पूजयेत्तांसमाहितः ॥ ५५ ॥ एवंकृतेनरानार्य्योराजानोराजवल्लभाः ॥ सिंहागजामृगाः क्रूराभवेयुर्वशगाध्रुवम् ॥ ५६ ॥ चिंतेध्यात्वानिजंकार्य्यंशयीतविजनेव्रती ॥ यथभावितथादेवीस्वप्नेवदतिमन्त्रिणे ॥ ५७ ॥ अथैतस्यामहायंत्रंप्रवक्ष्येसिद्धिदंनृणाम् ॥ कृत्वात्रिकोणंषट्कोणंषोडशारंवसुच्छदम् ॥ ५८ ॥ दशारद्वितयंपंचदशास्रंभूपुरद्वयम् ॥ त्रिकोणेकामबीजस्थवाग्भवंविलिखेत्पुनः ॥५९॥ षट्सुकोणेषुवाग्बीजंपाशंमायांसृणिंश्रियम् ॥ दीर्घचकवचंपश्चाद्विलिखेत्षोडशच्छदे॥६०॥शक्तीःषोडशपूर्वोक्ताब्राह्मयाद्याअष्टपत्रके ॥ भैरवैः संयुतान्यस्येद्दशारेदिक्पतीन्क्रमात् ॥६१॥ स्वस्वबीजादिकान्बीजसमूहः कथ्यतेऽधुना ॥ मांसंरक्तंविषंमेरुर्जलंवायुर्भृगुर्वियत्॥ ॥६२॥एतानिशशियुक्तानिपाशोमायांतिमामता ॥ वज्राद्यान्विलिखेत्सम्यक्पंक्तिपत्रेद्वितीयके ॥६३॥

मांसंलः ॥ रक्तंरः ॥ विषंमः ॥ मेरुःक्षः ॥ जलं वः ॥ वायुर्यः भृगुःसः वियत्हः ॥ ६२ ॥ एतानिशशियुक्तानिबिंदुयुतानि ॥ पाशःआं ॥ अंतिमाचरमामायाह्रीं ॥ ६३ ॥

---

१ साध्यमुच्चाटयोच्चाटयशोषय २ मारयमारयभीषयनाशयनाशय स्वाहा कंपयकंपयममाज्ञावर्तिनंकुरुसर्वाभिमतवस्तुजातं संपादय संपादय सर्वं कुरुकुरुस्वाहा ॥ ७७ ॥

तिथिपत्रेपंचदशदले ॥ गायत्र्यर्णैर्वैदिकगायत्रीवर्णैः ॥ भूमिमिति ॥ चतुरस्रद्वयकोणेषुवाग्वन्नी यरेफौलिखत् ॥ ६४ ॥ ६५ ॥ वार्तालीमाह ॥ वागिति ॥ भूमिःग्लौं ॥ सावाग्वीजेनपुटिता तन्मध्यस्थऐंग्लौंऐमिति ॥ ६६ ॥ सद्दकूगगंनाह । पूर्वोदितंबीजत्रयम् ॥

तिथिपत्रेमूलवर्णान्गायत्र्यर्णैः प्रवेष्टयेत् ॥ वाग्वन्नीविलिखेद्भूमिंमंदिरद्वितयाश्रिषु ॥ ६४ ॥ भूर्जादौ यंत्रमालिख्यजपंसंपातसाधितम् ॥ बाह्वादौविधृतंदद्यान्नृणांकीर्तिंधनंसुखम् ॥ ६५ ॥ बहुनाकिमिहोक्तेनवाराहीष्टंप्रयच्छति ॥ वाग्बीजपुटिताभूमिर्नमोतेभगवत्यथ ॥ ६६ ॥ वार्तालिवाराहगगनंसह्ग्वाराहिवापदम् ॥ राहुमुखितततोबीजत्रयंपूर्वोदितंवदेत् ॥६७॥ अंधेअंधिनिहृदयंरुंधेरुंधिनिहृत्तथा ॥ जंभेजंभिनिहृत्पश्चान्मोहेमोहिनिहृत्पुनः ॥ ६८ ॥ स्तंभेस्तंभिनिहार्दांतेपुनर्बीजत्रयंवदेत् ॥ सर्वदुष्टप्रदुष्टानांसर्वेषांसर्ववाक्पदम् ॥ ६९ ॥

ऐंग्लौंऐमिति ॥ ६७ ॥ हृदयंनमः ॥ हृन्नमः ॥ ६८ ॥ हार्दंनमः ॥ बीजत्रयंऐंग्लौंऐमिति ॥ ६९ ॥
त्रिबीजी ऐंग्लौंऐमिति ॥ सर्गाढ्यं ठचतुष्टयं ठःठःठःठः ॥ ७० ॥ वेदरुद्राक्षरः चतुर्दशोत्तरशतार्णः ॥ ७१ ॥

चित्तचक्षुर्मुखगतिजिह्वास्तंभंकुरुद्वयम् ॥ शीघ्रंवश्यंकुरुद्वंद्वंत्रिबीजीठचतुष्टयम् ॥ ७० ॥ सर्गाढ्यंचवर्मफट्स्वाहावेदरुद्राक्षरोमनुः ॥ प्रणवादिर्मुनिश्छंदः शिवोतिजगतीतथा ॥७१॥ वार्तालीदेवताप्रोक्तावार्तालिहृदयंस्मृतम् ॥ वाराहीतिशिरः प्रोक्तंशिखावाराहमुख्यपि ॥ ७२ ॥ अंधेअंधिनिवर्मोक्तंरुंधेरुंधिनिनेत्रकम् ॥ जंभेजंभिनिचास्त्रंस्यात्ततोध्यायेत्तुदेवताम् ॥ ७३ ॥ रक्तांभोरुहकर्णिकोपरिगतेशावासनेसंस्थितांमुंडस्रक्परिराजमानहृदयांनीलाश्मसद्रोचिषम् ॥ हस्ताब्जैर्मुसलंहलाभयवरान्संबिभ्रतींसत्कुचांवार्तालीमरुणांबरांत्रिनयनांवंदेवराहाननाम् ॥ ७४ ॥ तत्सप्तदशसाहस्रंप्रजपेत्तद्दशांशतः ॥ तिलैर्बंधूककुसुमैर्जुहुयान्मधुरान्वितैः ॥ ७५ ॥ पूजायंत्रमथोवक्ष्येजपादिनवशक्तिकम् ॥ स्वर्णेरूप्येतथाताम्रभूर्जपत्रेथदारुणि ॥ ७६ ॥

॥ ७२ ॥ ७३ ॥ ध्यानमाह ॥ रक्तेति ॥ मुसलवरौदक्षयोः ॥ ७४ ॥ ७५ ॥ ७६ ॥

---

१ ओं ऐंग्लौंऐंनमोभगवतिवार्तालिवाराहिवाराहमुखिऐंग्लौंऐंअन्धेअंधिनिनमोरुन्धेरुंधिनिनमोजंभेजंभिनिनमोमोहेमोहिनिनमःस्तंभेस्तंभिनिनमोऐंग्लौंऐंसर्वदुष्टप्रदुष्टानांसर्वेषांसर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तंभंकुरुकुरुशीघ्रंवश्यंकुरुकुरुऐंग्लौंऐंठः ठःठःहुंफट्स्वाहा ११४ ॥ २ अस्यश्रीवार्तालीमन्त्रस्य-शिवऋषि रतिजगतीछन्दः वार्तालीदेवताममाखिलावाप्तयेजपेविनियोगः ।

रात्रिर्हरिद्रा पूजायंत्रमाह ॥ योनीति ॥ योनिस्त्रिकोणम् ॥ ७७ ॥ भूबिंबंचतुरस्रम् ॥ ७८ ॥ तदग्न्यादिषुतस्यारेष्वाअग्न्यादिषु अग्निनिर्ऋतिवाय्वीशानाग्निदिशासु ॥ अगकं षडंगानि ॥ यजेदितिपूर्वेणान्वयः ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ स्तंभिनीध्याने

लिखेद्रोरोचनारात्रिचंदनागुरुकुंकुमैः ॥ योनिपंचास्रषट्कोणाष्टपत्रशतपत्रकम् ॥ ७७ ॥ सहस्रदल भूबिंबसंवीतद्वारसंयुतम् ॥ कैलासाचलमध्यस्थंपीठमेतद्विचिंतयेत् ॥ ७८ ॥ तत्रावाह्ययजेद्देवीमुपचारैर्मनोहरैः ॥ त्रिकोणमध्येदेवेशींतदग्न्यादिषुचांगकम् ॥ ७९ ॥ वार्तालीचापिवाराहीपूज्यावाराहमुख्यपि ॥ त्रिकोणेष्वंथपंचास्रेष्वंधिनीरुंधिनीतथा ॥ ८० ॥ जंभिनीमोहिनीचापिस्तंभिनीज्यातुपंचमी ॥ षट्कोणेषुपुनः पूज्याडाकिनीराकिनीतथा ॥ ८१ ॥ लाकिनीकाकिनीचापिशाकिनीहाकिनीपुनः ॥ षट्कोणपार्श्वयोः पूज्यंस्तंभिनीक्रोधिनीद्वयम् ॥ ८२ ॥ मुसलेष्टवरौवाधाकपालहलभृत्परा ॥ षट्कोणाग्रेयजेच्चंडोच्चंडंतस्याः सुतोत्तमम् ॥ ८३ ॥

इष्टोवरोदक्षेमुसलेवामे ॥ पराक्रोधिनी कपालहलमृत् कपालंदक्षे देवीसुतायचंडोच्चंडायनमइतिसुतपूजा ॥ ८३ ॥ सुतध्यानमाह ॥ शूलमिति ॥ डमरुकपालदक्षयोः शूलनागौवामयोः ॥ ८४ ॥ वार्तालीमुखं वार्ताल्यादि ॥ दव्यष्टकमनंतरोक्तं वार्तालीवाराहीवाराहमुख्यंधिनीरुंधिनीजंभिनीमोहिनीमोहिस्तंभिनीसंज्ञकम् ॥ रुद्राः एकादश वीरभद्रादयः अर्काःद्वादश धात्रादयः ॥ वसवोष्टौधरादयः ॥ अश्विनौनासत्यदस्रौ ॥ ८५ ॥ एकैकःपत्रत्रिकेपूज्यः ॥ एवंनवनवतिः ॥ चरमपत्रेतुजंभिनीस्तंभि

शूलंनागंचडमरुंकपालंदधतंकरैः इन्द्रनीलनिभंनग्नंजटाभारविराजितम् ॥ ८४ ॥ अष्टपत्रेषुवार्तालीमुखंदेव्यष्टकंजयेत् ॥ शतपत्रेषुसंपूज्यारुद्रार्कौवसवोश्विनौ ॥ ८५ ॥ त्रिरेकैकोंत्यपत्रेतुजंभिनीस्तंभिनीयुता ॥ शतकोणाग्रतः पूज्यः सिंहोमहिषसंयुतः ॥ ८६ ॥ सहस्रपत्रेवाराहींपूजयेत्तुसहस्रशः ॥ अंकुशोतडेन्तवाराहीनमोंतस्तन्मनुः स्मृतः ॥ ८७ ॥ भूपुरद्वारदेशेतुबटुकंक्षेत्रपालकम् ॥ योगिनींगणनाथंचतत्तन्मंत्रैः प्रपूजयेत् ॥ ८८ ॥ फांतः सबिंदुर्बटुकोडेंवोहत्सप्तवर्णकः ॥ मेरुः शशियुतः क्षेत्रपालायनमसान्वितः ॥ ८९ ॥

नीभ्यांनमइति ॥ ८६ ॥ वाराहीमंत्रमाह ॥ अकुश इति ॥ क्रौंवाराहीनमःइतिमंत्रेणसहस्रवारंवाराहीमेवपूजयत् ॥ ८७ ॥ ॥ ८८ ॥ बटुकमंत्रमाह ॥ फांतइति ॥ फांतोवः वंवटुकायनमइति ॥ क्षेत्रपालमाह ॥ मेरुरिति ॥ मेरुःक्षः ॥ क्षंक्षेत्रपालायनम इति ॥ ८९ ॥

योगिनीमंत्रमाह ॥ अष्टार्णइति ॥ वायुर्यःशेषयुक्आयुतः सचेद्रोबिंदुयुतश्च यांयोगिनीभ्योनमइति ॥ गणेशमंत्रमाह खांतइति ॥ खांतोगः ॥ गंगणपतयेनमइति ॥ ९० ॥ ९१ ॥ ९२ ॥ बटुकस्यबलिमंत्रमाह ॥ एहीति ॥९३॥ सदृक्जलमियुतोवः ॥वि ॥९४॥ वह्निपत्नीस्वाहा स्वरूपमपरं ॥ शरपश्चाक्षरः पंचपंचाशदर्णः ॥ यथा--एह्येहिदेवीपुत्रबटुकनाथकपिलजटाभारभासुरत्रिनेत्रज्वाला

अष्टार्णः शेषयुग्वायुः सचन्द्रोयोगिनीपदम् ॥ भ्योनमोंतः सप्तवर्णः खांतश्चंद्रान्वितोगण ॥ ९० ॥ पतयेहचाष्टवर्णाः प्रोक्तास्तेमनवःक्रमात् ॥ दिक्पालानायुधैर्युक्तान्दिक्षुसंपूजयेत्ततः ॥९१॥ पूजांतेब टुकादिभ्योबलिमंत्रैर्बलिंहरेत् ॥ बलिदानोचितामंत्राः कीर्त्यंतेखिलसिद्धिदाः ॥ ९२ ॥ एह्येहीतिप दंप्रोच्यदेवीपुत्रेतिकीर्तयेत् बटुकांतेनाथिकपिलजटाभारभासुर ॥ ९३ ॥ त्रिनेत्रज्वालाशब्दांतेमुख सर्वजलंसदृक् ॥ म्नान्नाशययुगंसर्वोपचारसहितंवलिम् ॥९४॥ गृह्णयुग्मंवह्निपत्नीशरपंचाक्षरोमनुः ॥ बटुकस्यबलिंदद्यादनेनश्रद्धयान्वितः ॥ ९५ ॥ मेरुः षड्दीर्घयुग्वर्मस्थानक्षेत्रपदंवदेत् ॥ पालेशसर्व कामंचपूरयानलवल्लभा ॥ ९६ ॥ त्रयोविंशतिवर्णाढ्यः क्षेत्रपालमनुर्मतः ॥ योगिनीनामथो मन्त्रः पद्यरूपः प्रपठ्यते ॥ ९७ ॥

मुखसर्वविघ्नान्नाशय २ सर्वोपचारसहितंबलिंगृह्ण २ स्वाहेति ॥ ९५ ॥ क्षेत्रपालबलिमंत्रमाह ॥ मेरुरिति ॥ मेरुःक्षः ॥ षड्दीर्घयुक् क्षांक्षींक्षूंक्षैंक्षौंक्षः हुंस्थानक्षेत्रपालेशसर्वकामंपूरयस्वाहेति ॥ ९६ ॥ ९७ ॥

योगिनीबलिंमंत्रमाह ॥ ऊर्ध्वमित्यादि ॥ ९८ ॥ स्वाहांत स्वरूपमेव ॥ भूमिनन्दाक्षर एक नवतिवर्णः पद्येनसह ॥ ९९ ॥ गणेशबलि मंत्रमाह ॥ दीर्घेति ॥ शर्ङ्गीगः दीर्घत्रयेंदुयुक्गांगींगूं ॥ सैंदुगं ॥ मारुतोयः भगवान्एयुतः ये ॥ तोयंवः ॥ १०० ॥ लोहितःपः ॥

ऊर्ध्वंब्रह्मांडतोवादिविगगनतलेभूतलेनिष्कलेवापातालेवासलिलपवनयोर्यत्रकुत्रस्थितावा ॥ क्षेत्रेपीठो पपीठादिषुचकृतपदाधूपदीपादिकेनप्रीतादेव्यःसदानःशुभबलिविधिनापांतुवीरेंद्रवंद्याः ॥९८॥ यांयो गिनीभ्यःस्वाहांतोभूमिनंदाक्षरोमनुः ॥ योगिनीनांबलिंदद्यादनेनविधिपूर्वकम् ॥ ९९ ॥ दीर्घत्रयें दुयुक्सेंदुःशार्ङ्गीगणपतार्णकाः ॥ मारुतोभगवांस्तोयंरवरांतेदसर्वच ॥ १०० ॥ जनंमेवशमानांतेयः सर्वोलोहितोहली ॥ दीर्घोरसहितंप्रांतेवलिंगृह्णयुगंशिरः ॥ १ ॥ गणेशबलिमंत्रोयंगगनश्रुतिवर्ण वान् ॥ एवंतेभ्योबलिंदत्वास्वस्वमुद्रांप्रदर्शयेत् ॥ २ ॥ अंगुष्ठंतर्जनीयुक्तंदर्शयेद्बटुकेबलौ ॥ अंगुष्ठा नामिकेवामेक्षेत्रपालबलौमता ॥ १०३ ॥

दीर्घोहलीचा ॥ शिरःस्वाहा ॥ १०१ ॥ गगनश्रुतिपर्णवान् ॥ चत्वारिंशदर्णः ॥ यथा--ओंगांगींगूंगणपतयेवरवरदसर्वजनंमेवशमा नयसर्वोपचारसहितंबलिंगृह्ण २ स्वाहेति ॥ १०२ ॥ १०३ ॥

॥ १०४ ॥ १०५ ॥ १०६ ॥ ॥ १०७ ॥ तापिच्छंनामतमालपुष्पम् ॥ लाजानांचूर्णयुतैस्तिलैःखरमेषरुधिरयुतैः ॥ १०९ ॥ सपत्नसदनंशत्रुगृहम् ॥ एतस्मैपिंडाय ॥ ११० ॥ १११ ॥ ?१२ ॥ यंत्रमाह ॥ विलिख्येति ॥ तारेप्रणवे ॥ साध्याख्यंसाध्यनाम ॥

किंचिद्वक्रीकृतामध्यागणनाथबलौस्मृता ॥ अनामामध्यमांगुष्ठायोगिनीनांबलौपुनः ॥ १०४ ॥ एवंसंपूज्यसंस्तुत्यनत्वात्मन्युपसंहरेत् ॥ सिद्धमंत्रःप्रकुर्वीतप्रयोगाञ्छिवभाषितान् ॥ १०५ ॥ हरिद्रयाचन्दनेनलाक्षयागुरुणापिच ॥ पुरेणविविधैर्मांसैर्जुहुयादिष्टसिद्धये ॥ १०६ ॥ हरिद्रामालयाकुर्याज्जपंस्तंभनकर्मणि ॥ स्फाटिकैःपद्मबीजैश्वरुद्राक्षैःशुभकर्मणि ॥ १०७ ॥ स्वर्णादिपात्रैःसुरयाबंधूककुसुमैस्तिलैः ॥ वाराहींतर्प्पयेत्सम्यक्कामसंपूर्तयेनरः ॥ १०८॥ चतुःशतंतुतापिच्छैर्जुहुयात्स्तंभनेच्छया ॥ लाजचूर्णतिलैःकुर्यात्खरमेषासृजान्वितैः ॥ १०९ ॥ पिंडंमनोहरंतंतुपूजयेत्तर्पयेदपि ॥ सपत्नसदनंसांगमेतस्मैविनिवेदयेत् ॥ ११० ॥ कुंडेपिंडंमनिधायास्मिंजुहुयात्तत्रचायुतम् ॥ एकविंशतिरात्रीषुलाजैरक्तसमन्वितैः ॥ १११ ॥ एवंकृतेवैरिवृंदंभक्ष्यतेयोगिनीगणैः ॥ अथयंत्रंमहादेव्याःप्रोच्यतेशकटाभिधम् ॥ ११२ ॥ विलिख्यतारेसाध्याख्यंभूबीजेनप्रवेष्टयेत् ॥ उकारेणचसंवेष्ट्यभूपुरंपरितोलिखेत् ॥ ११३ ॥

भूबीजेन ग्लौमितिबीजेन ॥ ११३ ॥

कर्मसमन्वितम्. अमुकमुच्चाटयेतिक्रियायुतम् ॥ ११४ ॥ धराबीजंतदेव ॥ अंकुशःक्रों ॥ झिंटीशः एकारः ॥ ११५ ॥ नूत्नेनवीने ॥ ११६ ॥ ११७ ॥ रात्र्याहरिद्रया ॥ पाषाणेलिखित्वाम्भौनिःक्षिप्तंतापकारि ॥ ११८ ॥ ११९ ॥ साध्यर्क्षतरवः साध्यस्ययज्जन्मनक्ष

अष्टवज्रान्वितंवज्रप्रांतेप्रणवमालिखेत् ॥ वज्रमध्येसाध्यनामलिखेत्कर्मसमन्वितम् ॥ ११४ ॥ धराबीजेनसंवेष्ट्यभूपुरंमूलविद्यया ॥ बहिरंकुशसंवीतंझिंटीशेनप्रवेष्टयेत् ॥ ११५ ॥ एतद्यंत्रंसमालिख्यनूत्नेकौलालखर्परे ॥ कृष्णपुष्पैःसमभ्यर्च्यनिःक्षिपेत्त्वरिवेश्मनि ॥ ११६ ॥ रिपुमुच्चाटयेच्छीघ्रंस्थितंवर्षशतान्यपि ॥ वादित्रेयंत्रमालिख्यवादयेत्समरांतरे ॥ ११७ ॥ श्रुत्वातद्ध्वसंत्रस्ताः पलायंतेविरोधिनः ॥ पाषाणेलिखितंरात्र्यापीतपुष्पेषुनिःक्षिपेत् ॥ ११८ ॥ संपूजितमधोवक्त्रंवाचंसंस्तंभयेद्द्विषाम् ॥ तापकार्यग्निनिःक्षिप्तंजलेदोषप्रदंभवेत् ॥ ११९ ॥ साध्यर्क्षरुतगर्भस्थंशत्रूणांदुःखदायकम् ॥ किंबहूक्तेनसर्वेष्टंसाधयेत्साधितंनृणाम् ॥ १२० ॥ इति श्रीमहीधरविरचितेमंत्रमहोदधौबगलादिमंत्रकथनंनामदशमस्तरंगः ॥ १० ॥

त्रंतस्यवृक्षमध्येक्षिप्तंतेषांदुःखदम् ॥ तेचपूर्वमुक्ताः ॥ साधितंसंपातादिनाप्रतिष्ठितमेतद्यंसर्वेष्टंसाधयेत् ॥ १२० ॥ इति श्रीमंत्रमहोदधिव्याख्यायांनौकायांबगलादिनिरूपणंनामदशमस्तरंगः ॥ १० ॥

श्रीविद्यांवक्तुंमंगलमाचरति ॥ त्रिनेत्रमिति ॥ मंत्रनायिकां त्रिलोकीवर्तिनांसर्वमंत्राणांस्वामिनीम् ॥ उत्पादिकामित्यर्थः ॥ १ ॥ अपरीक्षितायशिष्यायतांविद्यांनदद्यात् ॥ आत्मादेयःशिरोदेयंनदेयाषोडशाक्षरीतिवचनात् ॥ २ ॥ मंत्रमुद्धरति ॥ तारमिति ॥ तार ओं ॥ मयांह्रीं ॥ कमलाश्रीं ॥ एतद्बीजत्रयंकूटत्रयादौपठेत् ॥ आद्यकूटमाह ॥ ब्रह्माकः ॥ झिंटीश ए ॥ गोविद ई ॥ धरा लः ॥

ॐ त्रिनेत्रंकमलाकांतंनृसिंहंचंद्रशेखरम् ॥ नत्वासंक्षेपतोवक्ष्येश्रीविद्यांमंत्रनायिकाम् ॥ १ ॥ अपरीक्षितशिष्यायतांनदद्यात्कदाचन ॥ यदुच्चारणमात्रेणपापसंघःप्रलीयते ॥ २ ॥ तारंमायांचकमलामादौ बीजत्रयंपठेत् ॥ ब्रह्मझिंटीशगोविंदधरामायेतिचादिमम् ॥ ३ ॥ आकाशभृगुचक्रयभ्रमांसमायाद्वितीयकम् ॥ हंसधातृक्षमामायातृतीयंबीजमीरितम् ॥ ४ ॥

मायेति-प्रथमंकूटंकएइलह्रीमिति ॥ ३ ॥ द्वितीयमाह ॥ आकाशेति ॥ आकाशोहः ॥ भृगुःसः ॥ चक्रीकः अभ्रंहः ॥ मांसंलः ॥ मायेति-द्वितीयंकूटं हसकहलह्रीमिति ॥ तृतीयमाह ॥ हंसेति ॥ हंसःसः ॥ धाताकः ॥ क्षमालः ॥ मायाचेति-तृतीयंकूटं सकलह्रींमिति ॥ ४ ॥
कूटत्रयस्यसंज्ञाआह ॥ वागिति ॥ प्रथमंवाग्बीजं ॥ द्वितीयंकामबीजं ॥ तृतीयंशक्तिबीजं ॥ श्रीःश्रीबीजं ॥ माया ह्रीं ॥ कामःक्लीं ॥ वाक्ऐं ॥ शक्तिःसौः ॥ एतैः पंचबीजैःक्रमोत्क्रमाभ्यांसंपुटापूर्वोक्तषडर्णा ॥ ५ ॥ षोडशाक्षरी श्रीविद्याभिधामहाविद्या ॥ ६ ॥ भृगुःसः ॥ औःस्वरूपं ॥ तेनसौःशक्तिः ॥ कामबीजंक्लीं ॥ ७ ॥ न्यासानाह ॥ मूर्धेति ॥ दक्षिणामूर्तयेनमोमूर्ध्नि ॥ पंक्तयेनमोमुखे ॥

वाक्कामशक्तिसंज्ञंतुक्रमाद्बीजत्रयंभवेत् ॥ इयंषडर्णाश्रीमायाकामवाक्छक्तिसंपुटा ॥ ५ ॥ अनेकपुण्यसंप्राप्याश्रीविद्याषोडशाक्षरी ॥ मुनिःस्याद्दक्षिणामूर्तिःपंक्तिश्छंदःसमीरितम् ॥ ६ ॥ देवताजगतामादिश्रीमत्त्रिपुरसुन्दरी ॥ बीजमैंभृगुरौःशक्तिःकामबीजंतुकीलकम् ॥ ७ ॥ मूर्द्धास्यहृद्गुह्यपादेनाभौमुन्यादिकान्न्यसेत् ॥ न्यासान्सर्वान्प्रकुर्वीतमायाश्रीबीजपूर्वकान् ॥ ८ ॥

त्रिपुरसुन्दर्यैनमोहृदि ॥ ऐंबीजायनमोगुह्ये ॥ सौःशक्त्यैनमः पादयोः ॥ क्लींकीलकायनमोनाभौ ॥ इतिमुन्यादिन्यासः ॥ ८ ॥



---

१ श्रींह्रींक्लींऐंसौःॐह्रीं श्रींकएईलह्रींहसकहलह्रींसकलह्रींसौःऐंक्लींह्रींश्रीमितिषोडशाक्षरी। २ अस्यत्रिपुरसुंदरीमंत्रस्य दक्षिणामूर्तिऋषिःपंक्तिश्छंदः श्रीमत्त्रिपुरसुंदरी देवताऐंबीजंसौः शक्तिःक्लींकीलकंममाभीष्ट सिद्ध्यर्थेजपेविनियोगः ।

